








Madcap CONTEST

# जीतिए 30,000 इनाम !

जीतिए 10,000 रेडियो कैप

1,250 अर्ली बर्ड ईनाम



40 रैपर्स भेजने पर

जीतिए 20,000 स्पीडस्टर कार्स

2,500 अर्ली बर्ड ईनाम



20 रैपर्स भेजने पर

काफ़ीबाईट रैपर्स जमा कीजिए
एंट्रीफार्म में मज़ेदार
जवाब लिखिए
हर सप्ताह इनाम जीतिए,
8 सप्ताह के लिए !




रु.10,00,000 मूल्य की 500 छात्रवृत्तियाँ
(प्रति रु.2000 की)




मुफ़्त ! एक मज़ेदार टैटू हर 4 कॉफ़ीबाईट के साथ



JWT.7293.2002

HERO



ACTIVE





YANKEE





# Heroes start early.

Ride, race, take a tumble or even take a fall.
Because it's never too early to be a hero.



# गोलकोण्डदुर्गम्

## हैदराबाद्



**अमिताबबच्चनः वदति गोलकोण्डविषये ।.....**
**सः गोलकोण्डसाम्राज्यस्य, कुतुबशाहीशासकानां विषये च प्रतिदिनं विवरणं वदति 'सन् एट् ल्युमैर्'नामके दृश्यश्रव्यकार्यक्रमे !**

गोलकोण्डदुर्गं ११६३ तमे वर्षे देवगिर्यां निर्मापितं यादवराजैः । 'गोल्लकोण्ड'पदात् मेषपालनामकस्य पर्वतस्य कारणतः वा एतस्य दुर्गस्य एतत् नाम आगतम् । यादववंशीयानां शासनस्य अनन्तरं काकतीयराजाः एतत् दुर्गं पालितवन्तः । ततः तत् दुर्गं सुल्तानकौलिवर्यस्य अधीनं जातम् । तेलङ्गाणदेशे बहमनीराजानां प्रतिनिधित्वेन स्थितवान् सुल्तानकौलिः १५१८ तमे वर्षे स्वस्य स्वातन्त्र्यं घोषितवान् आसीत् ।

चत्वारि दशकानि यावत् तस्य शासनं निर्बाधं प्रवृत्तम् । कुतुबशाहीवंशस्य संस्थापकं तं नवनवति-तमे वयसि तदीयः पुत्रः जमशीदः मारितवान् ।

जमशीदः यदा सिंहासनस्य उत्तराधिकारी जातः तदा तदीयः सहोदरः राज्यात् पलाय्य विजयनगरसाम्राज्यं शरणं गतवान् । सप्त वर्षाणि सः तत्रैव अवसत् । जमशीदस्य मरणस्य अनन्तरं सिंहासनस्य अधिकारं प्राप्तुं सः गोलकोण्डम् आगतवान् । यदा सः विजयनगरे वसति स्म तदा तेन भागीरथीनामिका राजकुमारी परिणीता । सः त्रिंशद्वर्षाणि यावत् वैभवेन राज्यं शासितवान् । १५८० तमे वर्षे सः दिवं गतः । ततः तस्य पुत्रः पञ्चदशवर्षीयः महम्मदकौली सिंहासनम् आरूढवान् । ३२ वर्षाणि सः शासनं कृतवान् । तदवसरे सः उद्यानसरोवरादिभिः परिवृतं हैदराबादनगरं निर्मापितवान् ।



गोलकोण्डदुर्गे विलक्षणः रामभक्तः आसीत् । भद्राचलदेवालयस्य आराध्यमूर्तेः श्रीरामचन्द्रस्य भक्तिकारणतः सः ख्यातिं गतः । तस्य नाम आसीत् काञ्चर्ल गोपण्ण इति । सः करसङ्ग्रहवृत्तौ आसीत् । सः देवस्थानस्य विस्ताराय करं सङ्गृह्य देवस्थानकार्याय एव व्ययीकरोति स्म ।

राजा अब्दुलहसनः ए

तां वार्तां ज्ञात्वा तस्य कार्यं न्यायबाह्यं मत्वा तं कारागारे स्थापितवान् । ततः भगवान् रामः राज्ञः स्वप्ने आगत्य रामदासेन गोपण्णेन सङ्गृहीतस्य धनस्य निमित्तं प्राप्तिपत्रं दर्शितवान् । एतस्मात् राजा गोपण्णस्य निष्कपटताम् अवगत्य तं बन्धविमुक्तं कृतवान् । भद्राचलदेवस्थानाय धनसाहाय्यम् उद्घोष्य सुवर्णाभरणादीनि देवाय उपायनीकृतवान् च ।

कुतुबवंशीयाः कलापोषकाः आसन् । ते नृत्यकारान् सङ्गीतज्ञान् च प्रोत्साहयन्ति स्म । उर्दुपर्शियन्भाषयोः यावत् प्राधान्यं, तावदेव प्राधान्यं कल्पितं तैः तेलुगुभाषायाः अपि । १६८७ तमवर्षपर्यन्तं कुतुबशाहीयं शासनं प्रवृत्तम् । कुतुबवंशस्य अन्तिमः शासकः अबुलहसनः । तं च तेलुगुजनाः तानाशाहनाम्ना निर्दिशन्ति स्म । यथा एतस्य वंशस्य स्थापकः शोचनीयं मरणं प्राप्तवान् तथैव अन्तिमः राजा अपि शोचनीयं मरणम् एव प्राप्तवान् अन्तरङ्गविद्रोहकारणतः ।

गोलकोण्डदुर्गम् अभेद्यम् आसीत् । मुगलसम्राट् औरङ्गजेबः अष्ट मासान् यावत् प्रयत्नं कृत्वा अपि तत् दुर्गं वशीकर्तुं न शक्तवान् । किन्तु दुर्गस्य अन्तः स्थितेषु केचन अधिकारिणः एव विद्रोहं कृतवन्तः इत्यतः उत्कोचदानेन दुर्गस्य द्वारस्य उद्घाटनं कारितवान् औरङ्गजेबः । ततः तानाशाहः बद्धः, कारागारे स्थापितः च । सः कारागारे एव मृतः । एवं दक्षिणस्य एकं वैभवोपेतं शासनम् अस्तम् अगच्छत् ।

एताः सर्वाः घटनाः दृश्यश्रव्यमाध्यमेन गोल-कोण्डदुर्गे प्रदर्शयति आन्ध्रप्रदेशीयप्रवासोद्यमसंस्था । प्रायः देशे स्थितेषु प्रदर्शनेषु एतत् एव अत्युत्तमम् । अमिताबबच्चनस्य कण्ठश्रीः गोलकोण्डदुर्गस्य उन्नत्यवनत्योः चित्रं भवतां पुरतः उपस्थापयति ।





हैदराबादं यदा गम्यते तदा मा विस्मरन्तु गोलकोण्डदर्शनम् ।

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १९ अक्टोबर् - २००२ सञ्चिका - ०७









## अन्तरङ्गम्




**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, CHENNAI - 600 097
E.mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः नागिरेड्डी च

# उत्सवस्य उत्साहः अर्थपूर्णः स्यात्

पुनरपि सम्प्राप्तानि सन्ति उत्सवदिनानि । भविष्यति तेषु दिनेषु कुटुम्बसदस्यानां पुनर्मेलनम् । जनाश्च वर्णजातिकुलादिभेदं विस्मृत्य सामरस्यं शान्तिं च पोषयितुम् एकत्रिताः भवन्ति तदा आनन्देन ।

अल्पमतीनां स्वार्थसाधकप्रवृत्तिमतां, हिंसाप्रचोदने एव आस्थावतां, मानवीय-मौल्यानि तृणीकुर्वतां भीरूणां प्रहारात् ये प्राणेभ्यः सम्पत्तितः च वञ्चिताः जाताः तेषां रक्षणाय कार्यं कृतवतां स्मरणं कर्तुं सुयोग्यः कालः खलु अयम् ? उज्ज्वलोदर्कस्य हेतुभूतस्य एकमात्राश्रयस्य सदस्यस्य वियोगं प्राप्य अनाथतां गतानां विषये अपि चिन्तनीयम् अस्ति अस्माभिः एतदवसरे ।

किं मानवजीवनमात्रम् अधिकृत्य चिन्तनेन ? हिंसा तु प्रकृतिविषये तत्पुत्राणां विषये चापि प्रवृत्ता, प्रवर्तमानम् अस्ति अपि । पूर्वं मानवाः परिसरस्थाः जीविनः च सहजीवनं कुर्वन्तः आसन् । किन्तु तत् सहजीवनम् अद्य न दृश्यते । अक्टोबर्मासे राष्ट्रपितुः गान्धिवर्यस्य जन्मदिनाचरणं भविष्यति । सः 'मम स्वप्नस्थं भारतम्' इत्यस्मिन् स्वकीये ग्रन्थे लिखति - ''अतिदरिद्रः अपि देशं स्वकीयं भावयेत् । राष्ट्रनिर्माणविषये तदीयः सहकारः अपि विशेषतः भवेत् । उच्चनीचवर्गभेदरहितं स्यात् राष्ट्रम् । सर्वसमुदायस्य जनाः अपि शान्तिसौहार्दभावेन जीवनं यापयेयुः'' इति ।

यदि उत्सवाः एतादृशं सौहार्दस्य वर्धनं मनसि स्थापयेयुः तर्हि उत्सवस्य उत्साहः अर्थपूर्णः भवेत् ।

---

सम्पादकः - विश्वम्
Visit us at : http://www.chandamama.org

# भारतस्य उपराष्ट्रपतिः



यः पूर्वं कस्यचित् राज्यस्य मुख्यमन्त्री आसीत् सः इदानीं देशस्य उपराष्ट्रपतिः जातः अस्ति। सः अस्ति भैरोसिङ्ह शेखावतवर्यः। सः १२ वर्षाणि यावत् गुजरातराज्यस्य मुख्यमन्त्री आसीत्। निर्वाचने प्रतिस्पर्धिनं सुशीलकुमारशिन्धेवर्यं पराजित्य सः उपराष्ट्रपतिः जातः। मतदातारः आसन् लोकसभा-राज्यसभयोः ७८८ सदस्याः। शेखावतवर्यः १४९ मतानि आधिक्येन प्राप्य विजयी जातः।

शेखावतवर्यः १९२३ तमे वर्षे अक्टोबर्मासस्य २३ तमे दिनाङ्के जातः राजस्थानस्य सीकरजनपदे स्थिते कस्मिंश्चित् ग्रामे। उच्चमाध्यमिकविद्यालयीयस्य विद्याभ्यासस्य समाप्तेः अनन्तरं सः अग्रिमाध्ययनाय न प्रवृत्तः। स्थानीयं राजनैतिककार्यं सः प्राविशत्। जनसङ्घस्य अभ्यर्थित्वेन सः १९५२ तमे वर्षे राज्यसभानिर्वाचने दातारामघरक्षेत्रे ऐदम्प्राथम्येन चितः जातः। १९५७ तमे वर्षे सः सिदिमाधोपुरक्षेत्रे विजयी अभवत्।

पञ्चवर्षाणाम् अनन्तरं, तन्नाम १९६७ तमे वर्षे, सः किशनपोलक्षेत्रे विजयं प्राप्तवान्। १९७७ तमे वर्षे जनतापक्षस्य अभ्यर्थित्वेन सः चाब्डाक्षेत्रे विजयी जातः। १९८० तमे वर्षे तस्मिन् एव क्षेत्रे भारतीयजनतापक्षस्य अभ्यर्थित्वेन सः विजयम् अवाप्नोत्। १९८५, १९९०, १९९३ इत्येतेषु वर्षेषु सः भा.ज.प.-अभ्यर्थित्वेन निम्बाध-धोलपुर-बालिक्षेत्रेषु विजयी जातः। १९७७, १९९०,१९९३ इत्येतेषु वर्षेषु पौनःपुन्येन मुख्यमन्त्रित्वेन चितः सः १९९८ तमवर्षपर्यन्तं मुख्यमन्त्री आसीत्।

राष्ट्रियराजनैतिकक्षेत्रस्य प्रवेशाय यद्यपि महान् अनुरोधः आसीत् तथापि सः स्वपक्षस्य राज्यनेतृत्वमात्रेण एव सन्तृप्तः आसीत् बहूनि वर्षाणि यावत्।

राजनैतिकक्षेत्रे न कोऽपि न कस्यापि शत्रुः इति सार्वजनिकतया उद्घोषितवान् सः स्वस्य अधिकारावधौ विरोधिपक्षस्य सदस्यैः सर्वैः सह अपि मैत्र्या व्यवहरति स्म। अधिकारे गते अपि तस्य मैत्रीव्यवहारः अक्षुण्णः एव आसीत्। इदानीं उपराष्ट्रपतिपदे तिष्ठन् एव सः राज्यसभायाः सभापतिस्थानम् अपि अलङ्करोति।

**लक्षशः वाचकानां प्रतिनिधित्वेन *चन्दमामा* उपराष्ट्रपतये भैरोसिङ्हशेखावत्-वर्याय अभिनन्दनानि समर्पयति, शुभोदर्कं च आशंसति।**

श्रीगन्धतैलं वातामतैलं च ....

# चिन्तो: फेनकचयनम्












**गतेभ्यः अशीतिवर्षेभ्यः श्रीगन्धस्य सुगन्धं गृहं गृहं प्रापयन्ती अस्ति मैसूरुश्रीगन्धसंस्था ।**








Almond oil moisturiser and antiseptic soap

# 'अराकु'खातः



अग्रिमप्रवासावसरे यदि भवन्तः पर्वतप्रदेशान् द्रष्टुम् इच्छेयुः तर्हि आन्ध्रप्रदेशीयम् अराकुखातम् अवश्यं गच्छेयुः । एषः खातः प्रशान्तपरिसरोपेतः । पूर्वघट्टप्रदेशे अनन्तगिरिपर्वतश्रेण्यां विशाखपत्तनतः ११२ कि.मी. दूरे समुद्रस्तरात् ९७५ मीटरुन्नते स्थले अस्ति एषः । प्रसिद्धः 'झिल्डा'जलपातः एतस्मिन् अस्ति ।



गिरिजनानां वासस्थानम् एतत् आरक्षितस्थलम् अस्ति । शीतलम् आह्लादकरं वातावरणं रमणीयेन नैसर्गिकसौन्दर्येण युक्तं सत् प्रवासिजनानां मनांसि हरति विशेषेण ।

एतस्मिन् प्रदेशे गिरिजनाः दृश्यन्ते आधिक्येन । सम्मार्जनी, तिन्त्रिणी, मधु इत्यादीनां क्रयणं विक्रयणं वा कुर्वन्तः ते तत्र तत्र दृष्टिगोचराः भवन्ति ।

एतस्मिन् प्रदेशे ये गिरिजनाः वसन्ति तेषां जीवनशैल्याः, कलायाः, संस्कृतेः च परिचायकः कश्चन अपूर्वः प्रदर्शनालयः एतस्मिन् प्रदेशे अस्ति । सर्वप्रकारैः अपि सज्जः दर्शनार्हः गिरिजनग्रामः अपि अस्ति अत्र ।

अराकुप्रदेशे भवन्तः सुदीर्घां पादयात्राम् अपि कर्तुम् अर्हन्ति । हरिततृणानाम् उपरि सञ्चरन्तः अपूर्वाणि सस्यानि वृक्षान् च द्रष्टुम् अपि अर्हन्ति ।

## मार्गविवरणम्

अराकुखातः विशाखपत्तनतः ११२ कि.मी. दूरे अस्ति । तं प्रदेशं प्राप्तुं रेलमार्गः, लोकयानमार्गः चेति उभौ अपि स्तः । कोट्टावलस-किरन्दुलरैल्मार्गे अराकुखातः अस्ति । प्रतिदिनं विशाखपत्तनतः प्रातः एकं रेल्यानं निर्गत्य सायं प्रत्यागच्छति ।



# मायासरोवरः

## ७

*[अश्वारोहिणः सैनिकस्य मुखात् जयशीलः ज्ञातवान् यत् मन्त्री धर्ममित्रः पर्वतीयसरोवरस्य तीरे उपस्थितः अस्ति इति । अतः सः मकरकेतुना सह तस्य समीपं गतवान् । मकरकेतुः अवगतवान् यत् मम मरणं निश्चितम् इति । अतः सः पिपासानिवारणव्याजेन जलग्रहं सरोवरसमीपं नीतवान्, जले निमग्नः अभवत् च । जयशीलः सिद्धसाधकश्च तेन सह गतवन्तौ आस्ताम् । तौ अपि जले निमग्नौ जातौ । तदनन्तरम् .......]*

जले निमग्नः जलग्रहः वेगेन अग्रे अगच्छत् । जयशीलः सिद्धसाधकः च उपरि गमनाय अवकाशम् एव न प्राप्तवन्तौ । एतस्मात् सिद्धसाधकः नितरां भीतः । सः भयकारणतः उच्चस्वरेण अवदत् - ''हे महाकालि !'' इति ।

जयशीलः तस्य आक्रन्दनं स्पष्टतया श्रृणोति स्म । पुरतः उपविष्टः मकरकेतुः अपि तेन स्पष्टतया दृश्यते स्म । 'जले तिष्ठन् अपि अहं कथं द्रष्टुं श्रोतुं च शक्नोमि ?'' इति आश्चर्यम् अनुभुतवान् सः ।

तदा मकरकेतुः उच्चैः हसन् अवदत् - ''जयशील ! वयम् इदानीं जलस्य अधोभागे स्मः । किं कोऽपि मानवः जले तिष्ठन् श्वासोच्छ्वासं कर्तुं शक्नोति ? किं सः वक्तुं द्रष्टुं वा शक्नुयात् ?'' इति ।



इति उपहासमिश्रितेन स्वरेण पृष्टवान् मकरकेतुः ।

''भवतः शिरसः कर्तनार्थम् । भवान् जलग्रहम् उपरि नयति उत न ?'' इति कठोरस्वरेण अपृच्छत् जयशीलः ।

सिद्धसाधकः शूलम् उन्नीय - ''अये महाकालि ! भवती अद्यावधि तादृशं भक्तं न दृष्टवती स्यात्, यश्च जले बलिं दत्तवान् स्यात् । अद्य तादृशी घटना घटते । सन्तुष्टा भवतु भवती'' इति उक्त्वा स्वस्य शूलं मकरकेतोः कण्ठस्य समीपे गृहीतवान् ।

तदा मकरकेतुः उच्चैः हसन् अवदत् - ''भोः, अहं भवतः आज्ञां न पालयिष्यामि । किम् एतदर्थं भवान् जयशीलः वा मम शिरः कर्तयितुं शक्नुयात् ? यदि भवन्तौ मम शिरः कर्तयेतां तर्हि जलस्य अन्तः स्थित्यर्थम् अपेक्षिता भवतोः शक्तिः क्षीणा भविष्यति । ततः भवतोः शवः जले प्लविष्यते । स्मर्यते खलु एतत् सर्वम् ?'' इति ।

मकरकेतोः एतस्य वचनस्य श्रवणात् तौ अवगतवन्तौ यत् आवाम् अत्र बन्धिनौ जातौ स्वः इति । तयोः हृदये अल्पा भीतिः अपि उत्पन्ना ।

''भवन्तौ न मया बद्धौ । अहम् अपि न भवद्भ्यां बद्धः । जलग्रहः जलमार्गेण गच्छन् जलाशयस्य अपरपार्श्वे स्थितं प्रदेशं प्राप्स्यति अचिरात् एव । तदा भवन्तौ निर्विघ्नतया अपेक्षितं स्थलं गन्तुं शक्नुतः'' इति अवदत् मकरकेतुः ।

अर्धघण्टाभ्यन्तरे जलग्रहः सरोवरस्य अपरपार्श्वं प्राप्य जलस्य ऊर्ध्वभागम् आगत्य

जलग्रहः वेगेन अग्रे गच्छन् आसीत् । पुरतः प्राप्तां पर्वतीयगुहाम् अतिक्रम्य सः जले अग्रे गतवान् ।

जलग्रहस्य उपरि उपविष्टः मकरकेतुः जलग्रहम् अग्रे गमनाय प्रेरयन् अवदत् - ''जयशील ! सिद्धसाधक ! किमर्थं किमपि न उच्यते ? किमर्थम् एतत् मौनम् ? किं चिन्ताग्रस्तौ भवन्तौ ? भवन्तौ जलस्य अन्तः तिष्ठन्तौ अपि सजीवं स्तः । किम् एतस्य कारणं किमिति ज्ञायते ?'' इति ।

''आम् । अवगतं मया । वयं जलग्रहसम्पर्के यावत् तिष्ठामः तावत् मानवाः अपि वयं सप्राणाः स्थातुं शक्नुमः'' इति धैर्येण अवदत् जयशीलः ।

''भवता सम्यक् एव उक्तम् । वस्तुस्थितिं जानतः अपि भवतः हस्ते खड्गः किमर्थम् ?''

शुण्डाम् उन्नीय सकृत् उच्चैः घीङ्कारम् अकरोत् ।

जयशीलः सिद्धसाधकः च सुदीर्घं श्वासोच्छ्वासं कृतवन्तौ । सजीवं स्थितं यत् तदर्थं भगवते धन्यवादान् समर्पितवन्तौ तौ ।

जयशीलः मकरकेतुम् अपृच्छत् – ''मकरकेतो ! किमेषः एव मायासारोवरः ?'' इति ।

मकरकेतुः जयशीलस्य दिशि मुखं परिवर्त्य अवदत् – ''एषः न मायासरोवरः । ये तं दृष्टवन्तः ते अद्यावधि सजीवं न स्थितवन्तः'' इति ।

जयशीलः यावत् तम् अन्यत् किमपि प्रष्टुम् उद्युक्तः तावता सः उच्चस्वरेण आज्ञापयत् – ''जलग्रह !'' इति ।

सिद्धसाधकः जयशीलः च झटिति ज्ञातवन्तौ यत् महती विपत्तिः उपस्थिता अस्ति इति । अतः तौ झटिति गजात् उत्प्लुत्य जले पतित्वा तरणम् आरब्धवन्तौ । कश्चन वृक्षः प्रवाहेण आनीयमानः ताभ्यां दृष्टः । तौ उभौ अपि तं गृहीतवन्तौ, अल्पेन एव प्रयत्नेन तम् आरुह्य उपविष्टवन्तौ च ।

तदा ताभ्यां लक्षितं यत् कश्चन व्याघ्रः अपि पादाभ्यां काञ्चित् वृक्षशाखां गृहीत्वा वृक्षेण सहैव प्लवमानः अस्ति इति । स च वृक्षः क्षणं यावत् जले निमज्जन् पुनः क्षणं यावत् जले प्लवमानः च अग्रे गच्छति स्म । तावता कश्चन जलप्रपातः सम्प्राप्तः । एतत् लक्षितवन्तौ जयशीलः सिद्धसाधकः च भीत्या कम्पमानौ नेत्रे निमील्य स्थितवन्तौ ।

पर्वतभागात् जलं शिलाखण्डराशेः उपरि पतति स्म । जलेन सह आगतः वृक्षः



कस्याश्चित् महाशिलायाः उपरि पतितः । तस्मात् वृक्षः द्विधा विभक्तः जातः । एकस्मिन् भागे जयशीलः आसीत्, अपरस्मिन् भागे सिद्धसाधकः व्याघ्रः च आस्ताम् । किञ्चित्-कालानन्तरं जयशीलः नेत्रे उन्मील्य दृष्टवान् । तस्य शरीरम् अनतिगभीरे जले प्लवते स्म । अनतिदूरे एव तीरं दृश्यते स्म । जलप्रपातस्य कलकलरवः श्रूयते स्म ।

'अहो, अहं सजीवः अस्मि' इति चिन्तयन् सः जले स्थितवान् । तावता तेन सिद्धसाधकः स्मृतः । 'सः कुत्र स्यात् ?' इति चिन्तयन् सः परितः दृष्टिं प्रसारितवान् । किन्तु सिद्धसाधकः कुत्रापि न दृष्टः ।

जयशीलः तीरं प्राप्य गुल्मान् अपसारयन् किञ्चित् अग्रे गतवान् । तावता व्याघ्रस्य गर्जनं तेन श्रुतम् । तदा सः वृक्षेण सह आगतं



व्याघ्रं स्मृतवान् । सिद्धसाधकस्य अपाय-सम्भावनां चापि स्मृतवान् ।

सः झटिति कोषात् खड्गम् अपनीय हस्तेन गृहीत्वा तां दिशम् अनुसृत्य गतवान्, यत्र व्याघ्रस्य गर्जनं श्रूयते स्म ।

तत्र सिद्धसाधकः मूर्च्छां प्राप्य पतितः तेन दृष्टः । व्याघ्रस्य पादेषु व्रणाः जाताः आसन् । अतः सः मन्दगत्या सिद्धसाधकसमीपम् आगच्छन् आसीत् ।

जयशीलः एकं शिलाखण्डं स्वीकृत्य व्याघ्रं लक्ष्यीकृत्य क्षिप्तवान् । शिलाप्रहारं प्राप्य व्याघ्रः गर्जन् एव मुखं परिवृत्य दृष्टवान् ।

एतावता सिद्धसाधकः सचेतनः जातः । पुरतः यदा व्याघ्रः दृष्टः तदा तदीयं धैर्यं सर्वथा विलुप्तम् । ''महाकालि ! मां रक्ष !'' इति उच्चैः आक्रोशनं कृतवान् सः ।

अत्रान्तरे जयशीलः ज्ञातवान् यत् तस्य व्याघ्रस्य पादेषु व्रणाः जाताः सन्ति, पृष्ठ-भागीयौ पादौ भग्नौ च स्तः इति । अतः सः तस्य पृष्ठभागीयौ पादौ गृहीत्वा आकर्षन् तं व्याघ्रं दूरे नीतवान् । तावता उत्थाय स्थितवान् सिद्धसाधकः अवदत् - ''जयशील ! भवान् अत्र ! व्याघ्रगर्जनं श्रुत्वा अहं सचेतनः जातः'' इति ।

अनतिदूरे एव पतितं स्वस्य शूलं गृहीतवान् सिद्धसाधकः । ततः जयशीलस्य हस्तात् खड्गं स्वीकृत्य - ''एषः व्याघ्रः महतीं पीडाम् अनुभवन् अस्ति । आसन्नमरणः अस्ति एषः । एतस्य एतां दुरवस्थां अहं द्रष्टुं न शक्नोमि । अतः अहम् एतं पीडामुक्तं करिष्यामि । तस्मात् एव पुण्यं प्राप्यते'' इति वदन् एकेनैव प्रहारेण व्याघ्रस्य मुण्डं रुण्डात् पृथक् कृतवान् ।

जयशीलः चिन्तामग्नः आसीत् । सः चिन्तामिश्रितस्वरेण उक्तवान् - ''सः मकर-केतुः कथमपि ग्रहीतव्यः एव अस्माभिः'' इति ।

''तत् तु सत्यम् एव । किन्तु सः इदानीम् अत्र नास्ति खलु ? अतः तद्विषये चिन्तनार्थं न एषः समयः । इदानीं तु वयं कुत्र स्मः इत्येव न ज्ञायते । अतः आदौ तत् ज्ञातव्यम् । एतस्य प्रदेशस्य परिचयः प्राप्तव्यः'' इति अवदत् सिद्धसाधकः ।

जयशीलः प्रतिवचनं वक्तुं यावत् उद्युक्तः तावता वनस्थानां वृक्षाणां मध्यतः कस्यचित् मानवस्य हाहाकारध्वनिः श्रुतः । तेनैव सह कस्यचित् वन्यमेषस्य आक्रन्दनम् अपि

श्रुतम् ।

''किं वन्यमेषः कमपि पुरुषं पीडयन् अस्ति ? अथवा कश्चन पुरुषः एव वन्यमेषं ग्रहीतुं प्रयासं कुर्वन् अस्ति ? मम तु भासते यत् उभौ अपि विपद्ग्रस्तौ स्तः इति । अतः आवां तत्र गच्छाव अविलम्बेन'' इति अवदत् सिद्धसाधकः ।

ततः उभौ अपि वेगेन ध्वनिम् अनुसृत्य गतवन्तौ । अल्पे एव काले ताभ्याम् एकं विलक्षणं दृश्यं दृष्टम्, यच्च नितरां भयजनकम् आश्चर्यकारकं च आसीत् । नदीतीरे कश्चन वृक्षः आसीत् । तस्य शाखाः सर्वासु दिक्षु प्रसृताः आसन् । तस्य शाखयोः अग्रभागे लम्बेते स्म कश्चन जनः मेषः च ।



एतत् दृष्ट्वा सिद्धसाधकः शूलम् उन्नीय अवदत् - ''कश्चन भूतः अदृश्यरूपेण तिष्ठन् एतौ गृहीतवान् अस्ति । अहं मम शूलेन तस्य भूतस्य हृदयम् एव विदारयिष्यामि'' इति ।

एवम् उक्त्वा यावत् सः शूलं क्षेप्तुम् उद्युक्तः तावता वृक्षस्य काचित् शाखा अधः आगत्य सिद्धसाधकस्य स्कन्धम् अस्पृशत् ।

'एषा शाखा मां ग्रहीष्यति' इति ज्ञातवान् सिद्धसाधकः झटिति पार्श्वे उत्प्लुत्य - ''भोः जयशील ! एतौ गृहीतवान् न भूतः, अपि तु कश्चन राक्षसः एव'' इति उच्चस्वरेण अवदत् ।

जयशीलः प्रतिवचनं किमपि अवदन् किञ्चित् अग्रे गत्वा खड्गेन वृक्षशाखां कर्तितवान् । तस्मात् सः वन्यमेषः पुरुषः च नद्यां पतितौ ।

सः मानवः कम्पमानः एव तरन् तीरम् आगत्य जयशीलसिद्धसाधकौ आश्चर्येण पश्यन् विनयेन - ''आर्यौ, भवन्तौ सेनापतिं मां नरभक्षकात् वृक्षात् रक्षितवन्तौ । तदर्थम् अनेके धन्यवादाः । अस्माकं महाराज्ञी भवतोः कृते प्रभूतम् उपायनं दास्यति'' इति अवदत् ।

अत्रान्तरे वृक्षाणां मध्ये कोऽपि कलकलः श्रुतः । अनन्तरक्षणे तत्र कश्चन रथः अपि दृष्टः । तस्मिन् एका वामना स्त्री उपविष्टा आसीत् । सा हरिणचर्म धृत्वा मयुरपिञ्छादिभिः अलङ्कृतं किरीटं धृतवती आसीत् । तस्याः रथम् उभौ वन्यमेषौ कर्षतः स्म । तस्याः पृष्ठतः वन्यमेषारूढाः बहवः वामनाः आगच्छन्तः आसन् ।

तां दृष्ट्वा सः वामनः सेनाधिपतिः विनयेन - ''महाराज्ञि ! अभिवादये'' इति उक्त्वा



प्रणम्य जयशीलसिद्धसाधकौ प्रदर्शयन् – ''एतौ वीरौ मां जीवभक्षकवृक्षात् रक्षितवन्तौ'' इति अवदत् ।

''महतः सन्तोषस्य विषयः । अस्माकं कृतज्ञताम् अर्हतः एतौ'' इति उक्त्वा सा जयशीलसिद्धसाधकौ पश्यन्ती उक्तवती – ''ह्यः रात्रौ मया भवन्तौ स्वप्ने दृष्टौ । तत्र भवन्तौ प्रतिज्ञां कृतवन्तौ यत् अस्माकं शत्रुः नाशयिष्यते, शाश्वतरक्षणं च प्रदास्यते इति । इदानीं च भवन्तौ प्रत्यक्षं दृष्टौ । महतः प्रमोदस्य विषयः एषः'' इति ।

''एषा राज्ञी महाचतुरा इव परिलक्ष्यते । जयशील ! एतस्याः विषये आवाभ्यां जागरूकतया भवितव्यम्'' इति मन्दस्वरेण जयशीलम् अवदत् सिद्धसाधकः ।

''स्यान्नाम तथा । तथापि एषा अपायग्रस्ता अस्ति । अतः एतस्याः साहाय्यम् अस्माकं कर्तव्यम्'' इति अवदत् जयशीलः ।

एतत् निराकुर्वन् सिद्धसाधकः अवदत् – ''एवं नास्ति जयशील ! प्रमुखं लक्ष्यं विस्मृत्य एतस्मिन् प्रवर्तामहे चेत् अस्माकम् अमूल्यः समयः व्यर्थीकृतः भवेत्'' इति ।

''मित्र ! समयस्य व्यर्थीकरणं न एतत् । कनकाक्षराजस्य अपत्ययोः इव एतस्याः प्राणाः अपि अमूल्याः एव । अपायग्रस्तानां रक्षणम् अस्माकं कर्तव्यम् । अतः यथाशक्ति एतस्याः साहाय्यं कृतं चेत् धर्मः पालितः स्यात्'' इति अवदत् जयशीलः ।

अत्रान्तरे समीपस्थस्य पर्वतस्य शिखरात् भयजनकः कश्चन चीत्कारः श्रुतः । सर्वे तस्यां दिशि दृष्टिं प्रसारितवन्तः । पर्वतशिखरे दश-द्वादश-पादपरिमितोन्नतः कश्चन विकृतः आकारः स्तिरः दृश्यते स्म । तस्य हस्ते काचित् महती शिला आसीत् । तस्य कटौ काचित्

शृङ्खला बद्धा आसीत् । शृङ्खलायाः अपरम् अग्रम् एकेन हस्तेन गृहीत्वा अपरेण हस्तेन खड्गं गृहीतवान् कश्चन पुरुषः तस्य पृष्ठतः स्थितः दृश्यते स्म ।

विकृताकारस्य दर्शनात् वामनराज्ञी, तस्याः सहचराः च भीत्या कम्पमानाः जाताः । विकृताकारस्य पृष्ठतः स्थितः जनः खड्गेन तं पीडयितुम् उद्युक्तः जातः । तदा चीत्कारं कुर्वन् सः विकृताकारः हस्तस्थां शिलाम् इतस्ततः अचालयत् द्वित्रवारम् ।

एतत्सर्वं दृष्ट्वा जयशीलः सिद्धसाधकम् उद्दिश्य – ''एतं घोराकारं स्वाधीनीकृत्य यः क्रीडति सः न वामनः । स तु वयम् इव सामान्यः मनुष्यः । किन्तु अयं विकृताकारः जन्तुः कीदृशः इति न ज्ञायते'' इति उक्त्वा राज्ञीं पश्यन् अपृच्छत् – ''महाराज्ञि ! भवती शत्रुविषयं वदन्ती आसीत् । तत्र दृश्यमानः घोराकारः जीवी, तस्य स्वामी च एव किं भवत्याः शत्रू ?'' इति ।

राज्ञी कथमपि धैर्यं धृत्वा रथात् अवतीर्य तयोः पुरतः स्थित्वा अवदत् – ''महात्मानौ ! अस्माकं शत्रुः पर्वतस्य अपरपार्श्वे निवसति । वस्तुतः सः अस्मज्जातीयः एव । परन्तु सः आत्मानं यक्षकुलीयं वदन् स्वस्य श्रेष्ठतां प्रतिपादयति । स्वस्य श्रेष्ठताविषये महान् गर्वः अपि तस्य । अस्माकं नाशं प्रतिज्ञातवान् अस्ति सः'' इति ।

''सः एतादृशं घोरं जीविनं स्वाधीनीकृतवान् अस्ति । तस्य साहाय्येन भवतः पराजेतुं लीलया शक्नुयात् सः । तथापि तेन किमर्थं तथा न कृतम् ?'' इति अपृच्छत् जयशीलः ।

''सः घोरः जन्तुः नरवानरः अस्ति । तद्द्वारा यः शिलां क्षेपयन् अस्ति सः तु भवन्तौ इव कश्चन सामान्यः मानवः । एतौ उभौ अपि दशभ्यः दिनेभ्यः पूर्वम् अस्मच्छत्रुपक्षं प्रविष्टवन्तौ स्तः'' इति उक्तवती वामनराज्ञी ।

यावत् राज्ञ्याः कथनं न समाप्तं ततः पूर्वम् एव सः नरवानरः उच्चैः चीत्कारं कुर्वन् महाशिलां वामनजनानाम् उपरि पातितवान् ।

– *(अनुवर्तते)*



# योग्यायाः वध्वाः प्राप्तिः

होजा नासीरुद्दीनः मित्रेण सह काफीं पिबन् आसीत् । तस्मिन् समये अपरः कश्चित् सुहृत् महता सन्तोषेण अभिवादनं कृत्वा अवदत् - "अग्रिमे सप्ताहे मम विवाहः भविष्यति । अतः अहं सन्तोषेण अस्मि । होजावर्य ! भवान् कदापि स्वविवाहविषये किं न चिन्तितवान् एव ?" इति ।

"मया चिन्तितम् आसीत् एव । किन्तु सा च पूर्वतनकालीना घटना" इति अवदत् होजा ।

"किं तदा कापि वधूः न मिलिता ?" इति अपृच्छत् सः सुहृत् ।

"मिलिता एव । यदा अहं तरुणः आसं तदा योग्यायाः वध्वाः अन्वेषणं कुर्वन् गृहात् निर्गतवान् । पर्वतान् खातान् च अतिक्रम्य मया दूरप्रयाणं कृतम् । अन्ते एकस्मिन् पर्वतखाते सुन्दरी काचित् दृष्टा । सा बुद्धिमती उदारा च आसीत् । किन्तु सा लौकिक-व्यवहारज्ञानवती न आसीत् । एषा मम व्यवहारेषु साहाय्यं कर्तुं न शक्नुयात् इति विचिन्त्य मया सा न परिणीता । अनन्तरं मम प्रयाणम् अनुवृत्तम् । एकं महत् नगरं प्राप्तं मया । तत्र मया अपरा सुन्दरी दृष्टा । सा बुद्धिमती, उदारा, व्यवहारज्ञा च आसीत् । ..."

"तथापि किमर्थं सा न परिणीता ?" मित्रेण पृष्टम् ।

"सा मम भाषां न जानाति स्म । अहं च तस्याः भाषां न जानामि स्म । एवं स्थिते आवयोः सम्भाषणं कथं वा प्रचलेत् ? सा च मम साहाय्यं कथं कुर्यात् ? अतः तस्याः परिणयः निराकृतः मया । ततः अग्रे गच्छता मया मिस्रदेशः प्राप्तः । तत्र अन्या सुन्दरी दृष्टा मया । सा बुद्धिमती, उदारा, व्यवहारज्ञा च आसीत् । आध्यात्मज्ञानवती च आसीत् । अतः सा परिपूर्णा इति निर्देष्टुं योग्या आसीत् । सा मम भाषां जानाति स्म अपि । अतः मया महान् आनन्दः प्राप्तः । मया चिन्तितं यत् भगवतः कृपया अद्य योग्या वधूः प्राप्ता मया इति ।"

"एतादृशी यदा प्राप्ता तदैव सा किमर्थं न परिणीता भवता ?" इति अपृच्छत् मित्रम् ।

"किन्तु मित्र ! किं करवाणि ? सा योग्यस्य पत्युः अन्वेषणे निरता आसीत् । अतः तया अहं तिरस्कृतः" इति खेदेन अवदत् होजावर्यः ।





# वेताल-कथा

# सिद्धेन्द्रस्य हितबोधः

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्वस्य स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – "राजन् ! प्राणापायम् अपि अविगणय्य यदेतत् साहसं क्रियते भवता तत् केन उद्देशेन ? राज्ञः भवतः सकाशे किं वा नास्ति ? अपारम् ऐश्वर्यं, यशः, जनानुरागः, शक्तिः इत्यादयः भवतः सन्ति एव । तथापि एषः उद्यमः किमर्थम् ? किं भवान् काञ्चित् मन्त्रतन्त्रादिविद्यां स्वाधीनीकर्तुम् इच्छति ? तथा चेत् जागरूकतया स्थितिः वरम् । यतः तादृश्याः विद्यायाः प्राप्तिः उपयोगः वा न



सुकरः । उपयोगशब्दः यदा स्मृतः तदा काचित् कथा मम स्मृतिपथम् आगता । पूर्वं सिद्धेन्द्रः नाम गुरुः स्वशिष्ययोः रविवर्म-विजयसिंहयोः कृते मन्त्रतन्त्रशक्तिं दत्त्वा उक्तवान् आसीत् यत् एतस्याः उपयोगः स्वार्थाय न स्यात् इति । विजयसिंहः स्वार्थाय तस्याः उपयोगं कृतवान् । तथापि अपरः कश्चित् पण्डितः तदीयं कृत्यं समर्थितवान् । एतत्सर्वम् एवं सङ्ग्रहेण उक्तं चेत् भवता किं वा ज्ञायेत ? अतः तां कथां विस्तरेण श्रावयामि । मार्गायासपरिहारार्थं तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कदाचित् महापण्डितः सिद्धेन्द्रः अरण्ये गुरुकुलं चालयति स्म । कदाचित् सः विद्याभ्यासं समापितवतः छात्रान् उद्दिश्य अवदत् - ''मया यद्यत् ज्ञायते तत्सर्वं बोधितम् । भवद्भिः सर्वैः एकं मुख्यं धर्मसूत्रं स्मर्तव्यम् । भवन्तः स्वस्य परिश्रमेण, बुद्धिमत्तया, कौशलेन च अपेक्षितं सर्वं सम्पादयेयुः । क्वचित् महान् परिश्रमः कृतः चेदपि कार्यं न सिध्यति । तदा एव भवद्भिः मन्त्रशक्तेः उपयोगः करणीयः, या च भवद्भिः ज्ञाता अस्ति । एतदत्र स्मर्तव्यं यत् प्रयत्नम् एव अकृत्वा विनायासेन फलं प्राप्तुं यदि मन्त्रविद्यायाः प्रयोगः क्रियेत तर्हि अहितं भविष्यति इति'' इति ।

विजयसिंहः रविवर्मा च सुहृदौ । तयोः गाढा मैत्री । तौ गौतमीपुरनिवासिनौ । दशाधिकवर्षाणि गुरुकुले विद्याभ्यासं कृत्वा तौ गुरोः प्रीतिं सम्पादितवन्तौ आस्ताम् । स्वस्थानं गन्तुम् इच्छन्तौ तौ गुरुं साष्टाङ्गं नमस्कृतवन्तौ । आशीर्वादं कुर्वन् गुरुः सिद्धेन्द्रः मन्दहासं प्रकटितवान् । सः मन्दहासः सूचयति स्म यत् मया उक्तं भवद्भ्यां न विस्मरणीयम् इति ।

गुरुकुलात् प्रत्यागच्छन्तौ तौ गोपुरनामकं ग्रामं प्राप्तवन्तौ । ग्रामे काचित् धर्मशाला आसीत् । तस्यां तौ वासं कृतवन्तौ । भोजनं कृत्वा तौ यदा बहिः उपविष्टवन्तौ आस्तां तदा ग्रामीणानां वार्तालापतः ताभ्यां ज्ञातं यत् तद्दिने सायं ग्रामे मल्लयुद्धं भविष्यति इति । तस्मिन् ग्रामे त्रिणेत्रः नाम कश्चन बलाढ्यः पुरुषः आसीत् । तस्य विश्वासः आसीत् यत् मां पराजेतुं कोऽपि न शक्नोति इति । ग्रामाधिकारी घोषितवान् आसीत् यत् यः त्रिणेत्रं जेष्यति तस्मै सहस्रं सुवर्णनाणकानि दास्यन्ते इति ।

एतत् ज्ञात्वा रविवर्मा विजयसिंहम् अवदत् - ''विजय ! आवां गुरुकुले मल्लयुद्धम् अधीतवन्तौ स्वः । पुरस्कारप्राप्त्यर्थम् एव न, अपि तु मल्लयुद्धे कियत् प्रावीण्यम् अर्जितम् इति ज्ञातुं वा अस्माभिः अत्र भागः ग्रहीतव्यः । गुरुकुले गुरुवर्येण आयोजितासु स्पर्धासु सर्वासु अपि मया एव विजयः प्राप्तः । अतः अहं त्रिणेत्रेण सह मल्लयुद्धं करिष्यामि'' इति ।

तदा विजयसिंहः अवदत् - ''मित्र ! भवान् तु धनिककुले जातः । अतः धनस्य आवश्यकता नास्ति भवतः । अहं नितरां निर्धनः अस्मि । सहस्रस्य सुवर्णनाणकानां सम्पादनाय स्थितम् एतम् अवसरं मह्यं ददातु कृपया'' इति ।

रविवर्मा सहर्षम् एतं प्रस्तावम् अङ्गीकृतवान् । ततः तौ मल्लयुद्धस्थलं प्राप्तवन्तौ । तत्र जनानां महान् सम्मर्दः आसीत् । ग्रामाधिकारी, अन्ये ग्रामस्य ज्येष्ठाः च वेदिकायाम् उपविष्टाः आसन् । मल्लयुद्धम् आरब्धम् । सर्वेषु पश्यत्सु त्रिणेत्रः सर्वान् मल्लान् पराजितवान् ।

अन्ते विजयसिंहः मल्लाङ्गणं प्रविष्टवान् । किञ्चित्कालं विजयसिंहत्रिणेत्रयोः मल्लयुद्धं प्रवृत्तम् । आदौ यद्यपि उभयोः अपि समानं सामर्थ्यं दृष्टं, तथापि अल्पे एव काले विजयसिंहस्य प्राबल्यं दृष्टिगोचरं जातम् । तस्य प्रहारेभ्यः त्रिणेत्रः भीतः । पञ्चनिमेषाभ्यन्तरे विजयसिंहः त्रिणेत्रं हठात् भूमौ पातितवान् । त्रिणेत्रस्य उरसः उपरि स्वस्य दक्षिणपादं स्थापयित्वा विजयगर्वेण मन्दहासं प्रकटितवान् ।





''किं वयं के इति भवता न ज्ञायते ? ग्रामाधिकारिणा दत्तानि सुवर्णनाणकानि अस्मभ्यं ददातु । अन्यथा वयं भवन्तौ उभौ अपि खण्डशः कर्तयिष्यामः'' इति तेषु अन्यतमः उच्चस्वरेण अवदत् ।

विजयसिंहः अङ्गुलीभ्यां शब्दं कृतवान् । तावता खड्गहस्तः कश्चित् चोरः रक्तं वमन् भूमौ पतितवान् । एतत् दृष्ट्वा अपरौ चोरौ ''अहो, मान्त्रिकः ! मान्त्रिकः एषः'' इति वदन्तौ ततः पलायितवन्तौ ।

एतत् दृष्ट्वा आश्चर्यम् अनुभवन् रविवर्मा अपृच्छत् - ''विजयसिंह ! भवता तस्य चोरस्य विषये मन्त्रप्रयोगः कृतः खलु ?'' इति ।

जनाः हर्षध्वनिं कृतवन्तः । ग्रामाधिकारी विजयसिंहाय सहस्रं सुवर्णनाणकानि दत्तवान् । जनानां प्रशंसा महती प्राप्ता विजयसिंहेन । ततः सः रविवर्मणा सह धर्मशालायां रात्रिं यापितवान् ।

प्रातः धर्मशालातः प्रस्थाय सायङ्कालसमये तौ एकम् अरण्यं प्रविष्टवन्तौ । तयोः मनसि भावना आगता यत् अन्धकारे अग्रे गमनं न श्रेयसे इति । अतः तौ एकस्य वृक्षस्य अधः शयानौ निद्रामग्नौ जातौ ।

मध्यरात्रे कश्चित् तौ उत्थापितवान् । यदा तौ नेत्रे उन्मीलितवन्तौ तदा तयोः पुरतः त्रयः दृढकायाः लुण्ठाकाः हस्तेन खड्गं गृहीत्वा स्थितवन्तः आसन् ।

तान् दृष्ट्वा विजयसिंहः कठोरस्वरेण पृष्टवान् - ''किम् अपेक्ष्यते ? के भवन्तः ?'' इति ।

एतत् श्रुतवतः विजयसिंहस्य मुखं कान्तिहीनं जातम् । सः अवदत् - ''न केवलम् चोरविषये, अपि तु मल्लयुद्धसमये अपि मया मन्त्रप्रयोगः कृतः आसीत्'' इति ।

''एतस्य तात्पर्यं सिद्धं यत् स्वार्थप्रेरितः सन् भवान् मल्लयुद्धे जयं प्राप्तवान् इति । गुरुवर्यस्य वचनं विस्मृतं भवता'' इति क्रोधेन अवदत् रविवर्मा ।

''मित्र ! मन्त्रशक्तेः उपयोगः कदा करणीयः इत्यत्र आवयोः मतिभेदः अस्ति । अतः किम् अधिकचर्चया ? आवां ग्रामं प्रतिगत्य तत्रत्यं पण्डितम् आवयोः पूर्वतनगुरुं विश्वनाथशास्त्रिणम् एतद्विषये पृच्छाव । तस्य कथनानुगुणं व्यवहराव'' इति अवदत् विजयसिंहः ।

रविवर्मा प्रतिवचनं किमपि न उक्तवान् । अनन्तरदिने प्रातः तौ विश्वनाथशास्त्रिणः

आश्रमं प्राप्तवन्तौ । आश्रमः नद्याः तीरे आसीत् । विश्वनाथशास्त्री आश्रमस्य पुरतः वृक्षस्य अधः उपविश्य ताडग्रन्थं परिशीलयन् आसीत् ।

रविवर्मा विजयसिंहः च पादस्पर्शपूर्वकं तं नमस्कृतवन्तौ ।

तौ आशीर्वादेन अनुगृह्य विश्वनाथशास्त्री अपृच्छत् – ''भवतोः पित्रोः द्वारा ज्ञातं यत् भवन्तौ विद्याभ्यासं समाप्य गुरुकुलात् प्रत्यागच्छन्तौ स्तः इति । अपि सिद्धेन्द्रवर्यः कुशली ?'' इति ।

उभौ अपि गुरुकुलवार्तां सङ्क्षेपेण निवेद्य सिद्धेन्द्रस्य हितबोधवार्ताम् अपि श्रावितवन्तौ ।

तदा विश्वनाथशास्त्री अवदत् – ''सिद्धेन्द्रवर्यस्य हितवचनम् आजीवनं स्मर्तुं योग्यम् अस्ति'' इति ।

''किन्तु गुरुवर्य ! खेदस्य वार्ता एषा अस्ति यत् एषः विजयसिंहः तत् हितवचनं विस्मृतवान् अस्ति । स्वार्थी सन् एषः स्वधर्मं विस्मृतवान्'' इति अवदत् रविवर्मा । ततः गोपुरग्रामे प्रवृत्तां मल्लयुद्धकथां, अरण्ये प्रवृत्तं चोरप्रसङ्गं च सः विवृतवान् ।

सर्वं श्रुत्वा विश्वनाथशास्त्री आश्चर्येण स्तब्धः सन् मन्दहासपूर्वकं विजयसिंहं दृष्टवान् ।

तदा विजयसिंहः अवदत् – ''मम व्यवहारे किम् अनौचित्यम् अस्ति इति रविवर्मा विवृणोतु तावत्'' इति ।

विश्वनाथशास्त्री शिरः चालितवान् । तदा रविवर्मा उक्तवान् – ''स्वार्थकारणतः एषः



विजयसिंहः मल्लस्य त्रिणेत्रस्य, चोराणां च विषये मन्त्रशक्तेः प्रयोगं कृतवान् । किम् एतत् अनुचितं न ? किम् एतत् गुरोः आज्ञायाः तिरस्करणं न ?'' इति ।

तत् श्रुत्वा विश्वनाथशास्त्री रविवर्माणम् उक्तवान् – ''वत्स ! विजयस्य व्यवहारे स्वार्थः अनौचित्यं वा किञ्चिदपि न दृश्यते । चिन्तनात् भवान् एव एतत् स्वयं ज्ञास्यति'' इति ।

वेतालः एवं कथां समाप्य अवदत् – ''अये राजन् ! विजयसिंहः गुरोः हितबोधं न पालितवान् इत्यत्र नास्त्येव सन्देहः । धनाशाग्रस्तः सन् सः त्रिणेत्रविषये चोरविषये च मन्त्रशक्तेः प्रयोगं कृतवान् । किम् एतत् अनुचितं न ? विश्वनाथशास्त्री किमर्थं तस्य व्यवहारं समर्थितवान् ? किं विश्वनाथशास्त्री पक्षपातम् आचरितवान् ? अथवा तस्य

निर्णयसामर्थ्यम् एव दुर्बलम् ? विजयसिंहः किमर्थं रविवर्माणं विश्वनाथशास्त्रिसमीपं नीतवान् ? विश्वनाथशास्त्री स्वपक्षं समर्थयेत् इति किं सः पूर्वम् एव जानाति स्म ? मम एतेषां प्रश्नानाम् उत्तराणि जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''विश्वनाथशास्त्रिणः वचनं युक्तम् एव अस्ति । मल्लः त्रिणेत्रः बलेन गर्वितः आसीत् । तादृशः मन्त्रशक्त्या जितः यत् तत्र न कोऽपि दोषः । यदि सः एतदवसरे अपि जितवान् स्यात् तर्हि सः अचिन्तयिष्यत् यत् अहम् अजेयः इति । तस्यः अहङ्कारः द्विगुणितः अभविष्यत् । तदा सः सर्वविधान् अत्याचारान् कर्तुम् उद्युक्तः अभविष्यत् । विजयसिंहः एतत् सर्वं जानन् एव तं पराजित्य एतां सम्भावनाम् उन्मूलितवान् । एतदर्थं यदि तेन मन्त्रशक्तिः प्रयुक्ता स्यात् तर्हि तत्र न किमपि अनौचित्यम् । लुण्ठाकविषये अपि एवम् एव । लुण्ठाकाः स्वभावतः क्रूराः भवन्ति । हिंसा एव तेषां साधनम् । धनदानात् अपि ते रविवर्माणं विजयसिंहं च त्यजेयुः इत्यत्र न कोऽपि विश्वासः आसीत् । ते रविवर्मणः प्राणान् अपि अपहरेयुः । मित्रस्य रक्षणाय विजयसिंहः मन्त्रशक्तेः प्रयोगं कृतवान् । एतेन समाजहितम् अपि तेन साधितम् । अवसरद्वये अपि जयः सुलभः तु न आसीत् । जये सुलभलभ्ये अपि यदि मन्त्रप्रयोगः कृतः स्यात् तर्हि तत् निश्चयेन अनुचितम् अभविष्यत् । किन्तु विजयसिंहेन तथा तु न कृतम् । तेन अपरम् अपि विवेकपूर्णं कार्यं कृतम् । उचितानुचितनिर्णयाय सः मित्रं रविवर्माणं गुरोः समीपं नीतवान् । गुरोः निर्णयः रविवर्मणः अपि सम्मतः स्यात् खलु ? यदि सः स्वपक्षं स्वयं समर्थितवान् स्यात् तर्हि प्रायः रविवर्मा तत् सर्वथा न अङ्गीकरिष्यत् । अतः सः तं गुरुसमीपं नीतवान् । एवं विजयसिंहस्य सर्वे व्यवहाराः विवेकेन कृताः एव'' इति ।

एवं वदन् त्रिविक्रमः मौनभङ्गं कृतवान् आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।



पुराणकथावली - ६

# अन्धः संन्यासी



स च वर्षाकालः । बुद्धः कस्यचित् पर्वतस्य मूले गुहायां वासं करोति स्म । तत्र बह्व्यः गुहाः आसन् । तासु तस्य अनुयायिनः वसन्ति स्म । समीपस्थाः दूरस्थाः च पण्डिताः तत्र आगत्य बुद्धेन सह धर्मतत्त्वशास्त्रादीनां विषये चर्चां कुर्वन्ति स्म ।

प्रातःकाले लघुवृष्टेः अनन्तरं बालसूर्य-किरणाः सर्वत्र प्रसृताः । बुद्धः स्वगुहातः बहिः आगत्य निसर्गस्य सौन्दर्यम् आस्वदमानः आसीत् । तावता केचन तत्र आगत्य बुद्धम् अभिवादितवन्तः । बुद्धः अपि प्रत्यभिवादनं कृतवान् ।

ततः ते उक्तवन्तः - ''भवान् हिंसायाः विरोधी खलु ?'' इति ।

''आम्'' - बुद्धः शान्ततया उक्तवान् ।

''किन्तु भवतः अनुयायी किञ्चित्कालात्पूर्वं शतशः पिपीलिकाः मारितवान् । सः इदानीं किमपि अकृतवान् इव शान्ततया तत्र उपविष्टः अस्ति'' इति वदन्तः ते अनतिदूरे शिलायाः उपरि उपविश्य ध्याने निमग्नं कञ्चित् वृद्धं संन्यासिनं दर्शितवन्तः ।

बुद्धः तं वृद्धसंन्यासिनं सकृत् दृष्ट्वा अवदत् - ''सः एकां पिपीलिकाम् अपि मारयितुं नार्हति'' इति ।

''न केवलं मया, अपि तु मम सहकारिभिः अपि तेन क्रियमाणं पिपीलिकामारणं दृष्टम् अस्ति । सः सञ्चरन् पिपीलिकाः मारितवान् निर्दयतया'' इति अवदत् तेषु कश्चित् ।

''पिपीलिकाः मृताः स्युः, किन्तु तेन न मारिताः ताः'' इति अवदत् बुद्धः ।



''श्रीमन् ! उभयोः अपि वाक्ययोः अर्थः समानः । फलं च समानम्'' इति अवदत् सः पुरुषः ।

''भवद्भिः यः दर्शितः सः आध्यात्मिकतया उन्नते स्तरे स्थितः । तस्य मनसि हिंसाभावस्य लेशोऽपि नास्ति । सः अन्धः । अतः तस्य सञ्चारसमये पिपीलीकाः मृताः स्युः कदाचित् । किन्तु तेन स्वबुद्ध्या तु ताः न मारिताः । क्रिया केन उद्देशेन क्रियते इत्येतम् अंशम् अवलम्ब्य हिंसा अहिंसा वा निर्णीता भवति, न तु क्रियामात्रदर्शनेन'' इति अवदत् बुद्धः ।

''सः अन्धः ? एतादृशं तपस्विनम् अन्धता बाधते इति तु महते आश्चर्याय'' इति अवदन् ते ।

''तस्य आन्ध्यस्य कारणं तदीयानि पूर्वजन्मनः कर्माणि । सः यद्यपि बाह्यचक्षुर्भ्याम् अन्धः, तथापि तदीयम् आन्तरिकं नेत्रम् उन्मीलितम् अस्ति । अतः एव तं वयं 'चक्षुःपालः' इति वदामः । सः आन्तरिकदृष्ट्या पाल्यमानः अस्ति इत्यतः तस्य एतत् नाम'' इति अवदत् बुद्धः ।

''महात्मन् ! सः पूर्वस्मिन् जन्मनि तादृशं किं पापं कृतवान्, येन च एतस्मिन् जन्मनि अन्धत्वम् आगतम् ?'' इति अपृच्छन् ते ।

तदा बुद्धः तदीयां कथाम् उक्तवान् –

''एषः चक्षुःपालः पूर्वस्मिन् जन्मनि निपुणः वैद्यः आसीत् । एकस्मिन् दिने काचित् वृद्धा तेन दृष्टा । सा स्वस्य उद्दिष्टस्थलं प्रति गमनाय बहुधा कष्टम् अनुभवति स्म ।

''अम्ब ! भवत्याः का समस्या ?'' इति अपृच्छत् वैद्यः ।

''अहं कदाचित् तीव्रज्वरग्रस्ता आसम् । तदवसरे एव मम दृष्टिशक्तिः विलुप्ता । अहं पूर्वं विविधेषु गृहेषु कार्याणि कृत्वा जीवामि स्म । इदानीं तु तादृशं कर्तुं न शक्यते मया । तथापि जीवनीयं खलु ? अतः मन्दिरस्य पुरतः उपविश्य भिक्षायाचनां करोमि । तत्र गमनाय एव इदानीम् उद्युक्ता अस्मि'' इति अवदत् वृद्धा ।

वैद्यः देवस्थानं प्रति गमनाय मार्गं प्रदर्श्य ताम् अवदत् – ''अम्ब ! अहं भवत्याः अन्धतां निवारयितुं शक्नोमि इति भाति'' इति ।

''एवम् ! यदि भवान् मम अन्धतां निवारयेत् तर्हि अहं यावज्जीवं भवतः गृहे कार्यं कुर्याम्'' इति महता आनन्देन अवदत् सा वृद्धा ।

''किम् एतत् सत्यम् ? किम् एवं प्रतिजानीते भवती ?''

''आम् । अहं तथा प्रतिजाने ।''

वैद्यः स्वगृहकार्याय एकं जनम् इच्छति स्म । सः योग्यस्य औषधस्य लेपनेन तस्याः अन्धतां निवारितवान् । सा द्रष्टुं समर्था जाता ।

अन्धताप्राप्तितः पूर्वं सा वृद्धा कस्यचित् धनिकस्य गृहे कार्यं करोति स्म । इदानीं दृष्टिशक्तिं प्राप्तवती सा तदेव गृहं गन्तुम् इष्टवती, न तु वैद्यस्य गृहम् । अतः सा वैद्यं वञ्चयितुम् इच्छन्ती अवदत् - ''वैद्यवर्य ! भवतः औषधं फलकारि न जातम् इति मन्ये । अहं द्रष्टुं न शक्नोमि'' इति ।

वैद्यः झटिति ज्ञातवान् यत् एषा असत्यं वदन्ती अस्ति इति । अतः सः नितरां कुपितः । सः ताम् अवदत् - ''मम औषधं फलकारि न भवेत् कथम् ? सर्वथा असाध्यम् एतत् । अस्तु तावत्, भवती अपरेण औषधेन नेत्रे लेपयतु । तदा कः परिणामः भवेत् इति पश्याम'' इति । ततः वृद्धा वैद्येन दत्तेन अपरेण औषधेन नेत्रयोः लेपनं कृतवती । हन्त ! तस्याः दृष्टिशक्तिः पुनः विलुप्ता ।

''मम दृष्टिः विनष्टा । मम दृष्टिशक्तिः विलुप्ता'' इति आक्रोशनं कृतवती वृद्धा ।

''भवत्याः दृष्टिशक्तिः पूर्वम् एव गता आसीत् । अहं तस्याः पुनःप्राप्त्यर्थं प्रयत्नं कृतवान् । किन्तु साफल्यं न प्राप्तम् । अतः अत्र शोचनीयं किमपि नास्ति'' इति उक्त्वा सः वैद्यः ततः निर्गतवान् ।

एवं बुद्धः यदा कथां समापितवान् तदा ते आगन्तुकाः पृष्टवन्तः - ''वृद्धा वैद्यं वञ्चयितुम् इष्टवती । अतः वैद्यः तस्यै दत्तां दृष्टिशक्तिं प्रतिस्वीकृतवान् । अतः अत्र वैद्यस्य न कोऽपि दोषः । तथापि तस्य दुष्फलं कथं प्राप्तं तेन ?'' इति ।

''वृद्धा तु मूर्खा । स्वमूर्खतां प्रदर्शितवती सा । किन्तु वैद्यः विवेकी । तेन कोपः न करणीयः आसीत्, प्रतीकारः न चिन्तनीयः आसीत् । तदुभयम् अपि कृतं तेन । अन्यच्च तेन वृत्तिधर्मस्य पालनम् अपि परित्यक्तम् । दोषाणां निवारणं वैद्यस्य कार्यं, न तु तद्विरुद्धाचरणम् । वैद्यः कदापि कस्यापि अहितं न चिन्तयेत् । अतः एव तेन एतस्मिन् जन्मनि अन्धता प्राप्ता'' इति अवदत् बुद्धः ।

''युक्तम् अस्ति भवतः कथनम् । उपकृताः स्मः वयम्'' इति उक्त्वा बुद्धं प्रणम्य ते ततः गतवन्तः ।





# अकृतचौर्योऽपि जातः चोरः

किशोरः हरीशः च प्रतिवेशिनौ । किशोरः निर्धनः । किन्तु यथाशक्ति परोपकारं करोति स्म सः । हरीशः धनिकः । तथापि सः इच्छति स्म यत् मम यादृशं जीवनम् अस्ति ततोऽपि श्रेष्ठं सुखमयं च जीवनम् अन्यस्य कस्यापि न स्यात् इति ।

एकदा कश्चन शुनकः हरीशस्य गृहस्य पुरतः स्थित्वा निरन्तरम् अभषत् । एतत् श्रुत्वा कुपितः हरीशः पाषाणक्षेपणेन तं दूरं प्रेषितवान् । सः शुनकः किशोरस्य गृहस्य पुरतः स्थित्वा अभषत् । किशोरः एकस्मिन् कदलीपत्रे अन्नादिकं संस्थाप्य शुनकस्य पुरतः स्थापितवान् । शुनकः तत् खादित्वा सन्तोषेण पुच्छम् अचालयत् । ततः तदीयगृहस्य पृष्ठभागं गत्वा पादाभ्यां खननम् आरब्धवान् च ।

किशोरस्य वृद्धा माता एतत् दृष्ट्वा पुत्रम् आहूय – ''वत्स ! कालभैरवः भवद्विषये सन्तुष्टः इति भाति । एषः शुनकः कमपि सन्देशं यच्छति । अतः शुनकेन सूचिते स्थले खननं वरम्'' इति उक्तवती ।

किशोरस्य पत्नी एतत् श्रुत्वा खनित्र-कुद्दालादिकम् आनीतवती । किशोरः तत्र खननम् आरब्धवान् । यदा अधिकं खननं कृतं तदा तत्र एका काष्ठपेटिका प्राप्ता । तस्याः अन्तः सुवर्णनाणकानि आसन् । तैः सह एकं ताम्रशासनपत्रम् अपि आसीत् । तत्र लिखितम् आसीत् यत् भाविसन्ततेः सुखसन्तोषाय एतानि नाणकानि एवं रक्षितानि सन्ति इति ।

एतदनन्तरं किशोरस्य जीवने महत् परिवर्तनं जातम् । सः एकं समृद्धं कृषिक्षेत्रं क्रीतवान् । वाणिज्यम् अपि आरब्धवान् ।

अतः तदीयं जीवनं सुखमयं जातम् । तथापि सः स्वस्य परोपकारबुद्धिं न त्यक्तवान् । यथाशक्ति जनानाम् उपकारं करोति स्म सः ।

किशोरस्य उत्कर्षः हरीशस्य असूयायै जातम् । एतस्य उत्कर्षस्य किं कारणम् इति अन्वेषणम् आरब्धवान् सः । तेन सर्वम् अपि विवरणं ज्ञातम् । अतः सः ग्रामाधिकारिणः समीपं गत्वा अवदत् - ''महोदय ! भूमेः अन्तः यत् प्राप्यते तत् महाराजस्य खलु भवति ? किशोरः स्वस्य गृहस्य पृष्ठतः प्राप्तं निधिं स्वकीयं मत्वा स्वच्छन्दतया व्ययीकुर्वन् अस्ति'' इति ।



ग्रामाधिकारी सर्वविधविचारणां कारितवान् । सर्वं ज्ञात्वा सः हरीशम् आहूय अवदत् - ''किशोरस्य पूर्वजाः ताम्रशासने लिखितवन्तः आसन् यत् तत्रत्यसम्पत्तेः उत्तराधिकारिणः स्ववंशजाः एव इति । अतः किशोरेण प्राप्ता सम्पत्तिः तत्पूर्वजानाम् एव । भवता तु वृथा दोषारोपणं कृतम्'' इति ।

ग्रामाधिकारिणः एतस्य निर्णयस्य श्रवणस्य अनन्तरं हरीशस्य असूया प्रवृद्धा । शुनकः एव किशोरस्य सम्पत्तेः कारणम् इति सः स्मृतवान् । 'सः शुनकः महिमवान् इति अहं न जानामि स्म । अतः मया पाषाणक्षेपणेन सः निवारितः । आदौ सः मम गृहस्य पुरतः एव भषितवान् । एतस्मात् सिद्धं यत् मम गृहस्य पृष्ठतः अपि सम्पत्तिः अस्ति इति । किन्तु सः शुनकः इदानीं कुत्र इति न ज्ञायते' इति अचिन्तयत् सः ।

तस्माद्दिनात् हरीशः तस्य महिमान्वितशुनकस्य अन्वेषणे उद्युक्तः जातः । किन्तु कोऽपि शुनकः तत्समीपं न आगच्छति स्म । तथापि सः सहनया शुनकानां प्रतीक्षणम् अनुवर्तितवान् ।

सप्ताहानन्तरं कश्चन शुनकः हरीशस्य गृहस्य पुरतः स्थित्वा भषणम् आरब्धवान् । तस्य दर्शनमात्रेण हरीशः अवगतवान् यत् एषः एव महिमान्वितः शुनकः, यश्च किशोराय निधिं दर्शितवान् आसीत् इति । अतः सः आनन्देन तस्मै भोजनं दत्तवान् । अन्नादिकं खादित्वा शुनकः तस्य गृहस्य पृष्ठतः गत्वा पादाभ्यां खननम् आरब्धवान् । महता आनन्देन हरीशः तत्र खननं कृतवान् । तत्र तेनापि एका पेटिका प्राप्ता । पेटिकायां वज्रहारः रत्नाभरणादीनि चापि आसन् । किन्तु ताम्रपत्रं किमपि तत्र न आसीत् । तथापि - 'अग्रे एतद्विषये काऽपि समस्या न भवेत्'

इति विचिन्त्य हरीशः एकं ताम्रशासनं कारितवान् । तत् तस्य पितामहेन लिखितम् इव दृश्यते स्म ।

सम्पत्तेः प्राप्त्यनन्तरं तस्य गृहस्य सर्वे जनाः बहूनाम् आभरणानां धारणम् आरब्धवन्तः । तस्य पत्नी तु वज्रहारस्य धारणेन स्वसम्पत्तेः प्रदर्शनं कुर्वती सन्तोषम् अनुभूतवती ।

तस्य देशस्य राजा छद्मवेषं धृत्वा देशे सञ्चरति स्म । कदाचित् सः एतं ग्रामम् अपि आगतवान् । मन्दिरे तेन वज्रखचितहारधारिणी हरीशपत्नी दृष्टा । तया धृतं वज्रहारं दृष्ट्वा सः नितराम् आश्चर्यचकितः । यतः सः हारः तस्य पूर्वजानाम् आसीत् । सूर्यास्तसमये उद्याने एकाकितया विहरन्त्याः तस्य पितामह्याः कण्ठतः कोऽपि चोरः तं हारम् अपहृत्य नीतवान् आसीत् । राजा तस्य हारस्य प्रतिकृतिं कारयित्वा समग्रे देशे तस्य प्रदर्शनम् अपि कारयित्वा हारस्य प्राप्त्यर्थं प्रयत्नं कृतवान् । किन्तु हारः न प्राप्तः । तदीयः पितामहः तेनैव शोकेन दिवं गतः । तदीयः पिता अपि हारस्य प्रतिकृतिं स्वसमीपे रक्षन् हारस्य अन्वेषणाय यथाशक्ति प्रयासं कृतवान् । इदानीं तस्य हारस्य प्रतिकृतिः राज्ञः हस्तं गता आसीत् ।

राजा ग्रामाधिकारिणः समीपं गत्वा स्वस्य परिचयम् उक्त्वा हारवार्ताम् अपि उक्तवान् । सर्वस्य परिशीलनात् ज्ञातं यत् हरीशस्य पितामहः एव चोरः आसीत् इति । अतः राजा भटद्वारा हरीशम् आनायितवान् । सर्वं ज्ञातवतः हरीशस्य मुखं विवर्णं जातम् ।

राजा हरीशम् अवदत् – ''भवतः पितामहस्य सम्पत्तेः उत्तराधिकारिता भवतः इति ताम्रशासनात् ज्ञायते । चोरः आजीवन-कारागारवासेन दण्डनीयः आसीत् । किन्तु सः इदानीं नास्ति । भवान् तदुत्तराधिकारी अस्ति । अतः भवान् वर्षात्मकेन कारागार-वासेन दण्ड्यते मया । तदा एव मम पूर्वजानाम् आत्मा तृप्तः भवेत्'' इति ।

आत्मना कारितं ताम्रशासनम् एव इदानीं तस्य कारागारवासस्य कारणं जातम् आसीत् । राजाज्ञां विरोद्धुम् अशक्नुवन् हरीशः कारागारं प्रविष्टवान् । 'अकृतचौर्यः अपि अहं चोरः जातः अस्मि । दुराशायाः योग्यं फलं प्राप्तं मया' इति अचिन्तयत् सः ।






## मूषकपुराणम्



यदि भवन्तः राजस्थानस्य कर्नीदिवीमन्दिरं गन्तुम् इच्छन्ति तर्हि मूषकग्रहणाय कूटयन्त्रं न नेतव्यम् । 'देशनोक'ग्रामे स्थिते एतस्मिन् देवालये मूषकाः पाल्यन्ते, पोष्यन्ते, पूज्यन्ते च । एतस्मिन् आलये मूषकाः स्वेच्छया सर्वत्र सञ्चरन्ति । ग्रामजनाः तान् न पीडयन्ति कदापि । ग्रामीणानां विश्वासः अस्ति यत् मानवानाम् आत्मानः अन्यस्य योग्यशरीरस्य प्राप्तिपर्यन्तं तात्कालिकतया मूषकशरीरे वसन्ति इति ।

एतद्विषये स्थलपुराणम् एवं श्रूयते – बहोः कालात् पूर्वं कर्नीदिवी नाम संन्यासिनी देशनोकग्रामे वसति स्म । सा मन्त्रतन्त्रविद्यासु निपुणा । कदाचित् कश्चन बालः तस्मिन् ग्रामे दिवं गतः । तदा कर्नीदिवी भगवन्तं तस्य पुनरुज्जीवनं प्रार्थितवती । तस्याः प्रार्थना भगवता पुरस्कृता । किन्तु सः बालः पुनरुज्जीवनं झटिति प्राप्तुं न शक्तः, यतः तेन मानवशरीरं झटिति न प्राप्तम् । मानवशरीरप्राप्तिपर्यन्तम् आत्मना कुत्रापि वासः करणीयः खलु ? अतः सः आत्मा मूषकशरीरे न्यवसत् तात्कालिकतया । ततः आरभ्य देशनोक-ग्रामे मूषकाः पूज्याः जाताः । कर्नीदिवीमन्दिरं तु तेषां मूषकाणां स्वर्गायते अद्यापि ।

## विशिष्टं भाषाद्वयम्



तेलुगुभाषाभाषिणां कृते अत्रास्ति काचित् सन्तोषकरी वार्ता ! तेलुगुभाषासदृशी अन्या एका एव भाषा अस्ति प्रपञ्चे । तयोः भाषयोः सर्वाणि पदानि स्वरान्तानि एव भवन्ति । सा अपरा भाषा का इति वा भवतां प्रश्नः ? सा अस्ति – 'इटालियन्'भाषा ।



# पिशाचानां कृते पाकः

गङ्गा कलहशीला कठोरचित्ता च इति ख्यातिः आसीत् ग्रामे । पत्युः मरणस्य अनन्तरं जीविकार्थं पाककार्यम् अवलम्बनीयम् अभवत् तया । तस्याः पाकः रुचियुक्तः भवति स्म । अतः सा कलहशीला इति जानन्तः अपि जनाः उत्सवाद्यवसरेषु पाकार्थं ताम् आह्वयन्ति स्म ।

एकस्यां रात्रौ सा शयाना आसीत् । यदा कश्चित् शरीरकम्पनम् अकरोत् तदा तया जागरणं प्राप्तम् । नेत्रे यदा उन्मीलितं तदा तया त्रयः पिशाचाः दृष्टाः । तान् दृष्ट्वा सा भीत्या चीत्कारं कृतवती ।

तदा कश्चन पिशाचः अवदत् – ''भोः, अलं भीत्या । वयं भवत्याः अहितं कर्तुं न आगताः । अद्य अमावास्या । अतः विशेषपाकः सज्जीकरणीयः इति निश्चित्य वयम् आगताः स्मः । भवती पाकसाधनानि स्वीकृत्य अस्माभिः सह आगच्छतु'' इति ।

''मम आरोग्यं सम्यक् नास्ति । अतः अन्यं नयन्तु भवन्तः'' इति अवदत् गङ्गा ।

एतत् श्रुत्वा ते पिशाचाः कुपिताः । नेत्रे रक्तीकृत्य ते अवदन् – ''यदि भवती व्याजं कथयन्ती आगमनं निराकुर्यात् तर्हि भवतीम् अग्नौ क्षिप्त्वा दग्ध्वा खादेम । अतः व्याजकथनं परित्यज्य श्मशानम् आगच्छतु तावत्'' इति । अनन्तरं ते वातायनमार्गेण ततः निर्गत्य अदृश्याः जाताः ।

अनन्यगतिका गङ्गा कानिचन पाकसाधनानि स्वीकृत्य गृहात् निर्गत्य ग्रामात् बहिः स्थितस्य जीर्णगृहस्य पुरतः उपविश्य – 'मम

महर्षिः

प्रत्यागमनं प्रायः असम्भवम्' इति चिन्तयन्ती भयेन रोदनं कृतवती ।

तस्मिन् एव समये कश्चन पुरुषः तेन मार्गेण आगतः । रुदतीं महिलां दृष्ट्वा अनुकम्पां प्राप्य सः तस्याः समीपम् आगत्य अपृच्छत् - ''आर्ये ! भवती का ? एतस्मिन् असमये अत्र किमर्थं रोदनं क्रियते भवत्या ?'' इति ।

गङ्गा प्रवृत्तं सर्वं निवेद्य उक्तवती - ''मम तु भासते यत् एषः पिशाचोत्सवः मम प्राणान् अपहरिष्यति एव इति । अहम् एतस्याः विपत्तितः प्रायः रक्षणं प्राप्तुं न शक्नुयाम् एव'' इति ।

तदा पथिकः तां सान्त्वयन् उक्तवान् - ''आर्ये ! मम नाम शिवः इति । अहमपि पाचकः एव । भवत्याः स्थाने अहं पिशाचानाम् उत्सवे पाकाय गन्तुं सिद्धः । किम् एतत् अनुमन्यते भवत्या ?'' इति ।

''इतोऽपि श्रेष्ठं साहाय्यं किम् अन्यत् स्यात् वत्स ! ग्रामस्य मध्ये यः वटवृक्षः अस्ति तस्य अभिमुखम् एव अस्ति मम गृहम् । श्वः प्रातः एतानि साधनानि भवान् प्रत्यर्पयतु'' इति उक्त्वा पाकसाधनानि तस्मै दत्त्वा स्वगृहं प्रति गतवती गङ्गा । शिवः अपि श्मशानं प्रति प्रस्थितवान् ।

आगतं शिवं दृष्ट्वा ते पिशाचाः अपृच्छन् - ''अये, कः भवान् ? सा गङ्गा कुत्र ?'' इति ।

तदा शिवः निर्भीकतया - ''अकस्मात् केनचित् पिशाचेन आविष्टा जाता सा । एतं पाकसाधनसहितं स्यूतं मम शिरसि आरोप्य - 'अम्ब ! एषाहम् आगता, इति वदन्ती सा



ग्रामस्य अपरपार्श्वं प्रति धावितवती । भवतां साहाय्यार्थम् अहम् उपस्थितः अस्मि' इति उक्त्वा पाकम् आरब्धवान् ।

घण्टाभ्यन्तरे शिवस्य पाककार्यं समाप्तम् । तेन यः पाकः कृतः तस्य रुचेः आस्वादनेन पिशाचाः सर्वे नितरां सन्तुष्टाः । ते शिवस्य पाकं प्रशंसन्तः उक्तवन्तः - ''एतादृशः स्वादुपाकः इतः पूर्वम् अस्माभिः कदाचिदपि न आस्वादितः आसीत्'' इति । ततः समीपस्थस्य वृक्षस्य कोटरात् एकं चर्मस्यूतं निष्कास्य ते शिवाय दत्तवन्तः । अनन्तरम् उषसि एव कपोतरूपं प्राप्य ततः निर्गतवन्तः ते ।

तेषां निर्गमनस्य अनन्तरं शिवः स्यूतम् उद्घाटितवान् । तत्र सुवर्णनाणकानि बहूनि

आसन् । धनस्यूतं पाकसाधनग्रन्थिं च स्वीकृत्य शिवः गङ्गायाः गृहं प्रति प्रस्थितवान् ।

गङ्गां श्मशाने प्रवृत्तं निवेद्य - ''पिशाचाः यानि सुवर्णनाणकानि दत्तवन्तः तेषाम् अर्धभागः भवत्यै'' इति अवदत् सः ।

तदा गङ्गा शिवस्य हस्तात् तं नाणकस्यूतं बलात् स्वीकृत्य - ''किम् अर्धभागः दीयते भवता ? वस्तुतः एतानि सर्वाणि मदीयानि एव । अल्पकालं यावत् पाकः कृतः भवता । तदर्थम् एतत् स्वीकरोतु'' इति वदन्ती एकं सुवर्णनाणकं तस्मै दत्तवती ।

'एतत् सर्वथा अनुचितम्' इति अवदत् शिवः । तदा गङ्गा निन्दनवृष्टिम् एव कृतवती । तयोः कलहकोलाहलं सोढुम् अशक्तः प्रतिवेशी परमेश्वरः - ''भवतोः विवादस्य निर्णयं ग्रामाधिकारी एव कर्तुम् अर्हः । अतः तत्रैव गच्छाम तावत्'' इति अवदत् । ततः ते ग्रामाधिकारिसमीपं गताः ।

ग्रामाधिकारी प्रवृत्तं सर्वं श्रुत्वा - ''एतानि सुवर्णनाणकानि गङ्गया एव प्राप्तव्यानि'' इति निर्णयम् उक्त्वा नाणकस्यूतं गङ्गायै दत्तवान् ।

तदा शिवः खेदेन अवदत् - ''श्रमः मया कृतः । किन्तु फलं तु प्राप्तम् एतया कलहशीलया महिलया । अहं तु अन्यग्रामस्य जनः । अतः भवता एवं क्रियते'' इति ।

तदा ग्रामाधिकारी - ''भोः अलं त्वरया'' इति उक्त्वा गङ्गाम् उद्दिश्य - ''भवती शिवं पिशाचसमीपं प्रेषितवती इत्यतः धनं भवत्याः जातम् । एवमेव परमेशः भवतीं मत्समीपम् आनीतवान् । अतः धनं परमेशस्य जातम् । एवं ननु ?'' इति ।

गङ्गा निरुत्तरा जाता । खेदं प्रकटयन्ती सा शिवं परमेशं च क्षमां प्रार्थितवती । तदा ग्रामाधिकारी - ''यत् मनसि आगतं तदनुगुणं व्यवहारः न्यायसम्मतः न भवति इति स्मर्तव्यं भवत्या'' इति उपदिश्य धनस्यूतं शिवाय दत्त्वा - ''अत्र भवान् न्यायोचितं स्वस्य भागं स्वीकरोतु । अवशिष्टम् एतस्यै प्रत्यर्पयतु'' इति अवदत् ।

तदा शिवः - ''एषा मह्यं तत् कार्यं दापितवती, पाकसाधनानि दत्तवती च । अतः अर्धभागः एतस्यै दीयते मया'' इति उक्त्वा नाणकानाम् अर्धं तस्यै दत्तवान् । गङ्गा लज्जया तत् स्वीकृत्य विना वचनेन ततः निर्गतवती ।





# उत्तमः कविः

यशोवर्धनः कुन्तलदेशस्य राजा । सः कवीनां पण्डितानां च सत्कारे विशेषरुचिं दर्शयति स्म । सः स्वयं कविः आसीत् । काव्यस्य गुणदोषविमर्शे तस्य विशेषसामर्थ्यम् अपि आसीत् ।

कविसत्कारकार्यं तस्य आस्थाने आवर्षं प्रचलति स्म । एतदतिरिच्य नवरात्रोत्सवसमये नवसु अपि दिनेषु काव्यपाठः प्रचलति स्म । नूतनकवीनां काव्यस्य पठने विशेषनैर्भर्यं प्रदर्श्यते स्म तदवसरे । यस्य काव्यम् उत्तमं भवति तस्मै विजयदशमीदिने पुरस्कारः दीयते स्म । कवेः विशेषसम्मानः अपि प्रचलति स्म तस्मिन् दिने । कदाचित् उत्तमकाव्य-रचयिता आस्थानकविपदवीम् अपि प्राप्नोति स्म ।

एकस्मिन् वर्षे सरस्वतीपूजावसरे उभयोः कविवर्ययोः काव्यम् उत्तमकाव्यत्वेन चितं जातम् । तयोः कविवर्ययोः नाम आसीत् कृष्णशास्त्री रामशर्मा चेति । तयोः काव्यस्य गुणावगुणविमर्शं राजा यथा, तथैव आस्थानकवयः अपि कृतवन्तः ।

ते स्वस्य अन्तिमनिर्णयं श्रावयन्तः उक्तवन्तः - ''वयं चिन्तयामः यत् राम-शर्मणः काव्यम् एव कृष्णशास्त्रिणः काव्यात् श्रेष्ठम् इति । कृष्णशास्त्रिणः काव्ये माधुर्यम् अस्ति, लालित्यं च अस्ति इति तु सत्यम् । किन्तु तत्र क्वचित् व्याकरणदोषाः सन्ति, क्वचिच्च नीरसता अपि दृश्यते । किन्तु राम-शर्मणः काव्यम् एतस्मात् भिन्नम् । तस्मिन् रसपरिपुष्टिः आन्तं दृश्यते । पदलालित्यम्

अपि दृश्यते । अतः रामशर्मा एव 'एतस्य वर्षस्य श्रेष्ठः कविः' इति उद्घोषणीयम् । तेन लिखितं काव्यं च पुरस्कृतं स्यात्'' इति ।

किन्तु राजा यशोवर्धनः एतत् तिरस्कुर्वन् मन्दहासपूर्वकम् उक्तवान् – ''काव्यपठनावसरे तद्रचयितुः कवेः जीवनपद्धतिः अपि अवलोकनीया । कवेः गतजीवनं वर्तमानजीवनं चापि परिशीलनीयम् । मया गुप्तचराणां द्वारा एतयोः उभयोः अपि जीवनक्रमः अवगतः अस्ति । रामशर्मा सुशिक्षितः धनिकः च । इदानीम् अपि कश्चन भूस्वामी तं पोषयति । तदीयः ग्रामः सम्पद्युक्तः । सर्वदा सस्यश्यामलः भवति सः । एवं काव्यलेखनाय सर्वविधम् आनुकूल्यं प्राप्तवान् अस्ति रामशर्मा । अतः सः उत्तमं काव्यं रचितवान् । कृष्णशास्त्री तु सामान्यः कृषिकः । तेन सामान्यं शिक्षणं प्राप्तम् अस्ति । परिवारस्य पालनपोषणाय तेन आदिनं परिश्रमः करणीयः भवति । तस्य ग्रामस्य कृषिक्षेत्रम् अपि न समृद्धम् । महान् परिश्रमः कृतः चेत् एव अल्पः आयः प्राप्यते तत्र । तथापि सः मधुराः कविताः लिखितवान् । एतस्य कारणं – तस्य अन्तः स्थितः भावसमूहः । तदीया जीवनशैली अतिकठिना चेदपि स्वयंस्फूर्त्या तस्य अन्तरङ्गतः कविताः निर्गताः । एतादृशः जनः यदि सर्वविधानि आनुकूल्यानि प्राप्नुयात् तर्हि अपूर्वम् एव काव्यं सृजेत् । चिरस्थायि काव्यं च रचयेत् । एतत्सर्वं मनसि निधाय भवन्तः सर्वे वदन्तु यत् कस्य पुरस्कारः औचित्यम् आवहति इति'' इति ।

राज्ञः वचनानां श्रवणस्य अनन्तरं पण्डितानां मनसि भावः उत्पन्नः यत् अस्माकं निर्णयः न सुविचिन्तितः आसीत् इति ।

अतः ते एकस्वरेण उक्तवन्तः – ''कृष्णशास्त्री एव श्रेष्ठः कविः'' इति ।

राजा यशोवर्धनः कृष्णशास्त्रिणः सम्माननं कृतवान् । तस्मै योग्यानि उपायनानि दत्तवान् । ततः तम् आस्थानकविस्थाने नियोजितवान् अपि ।



# रसवार्ता:




## विलक्षणाः अतिथयः

ब्रेझिल्राजधान्यां रियोडेजनिरोनगरे एकं प्रसिद्धम् उपाहारगृहम् अस्ति । तत्र पूर्वम् एव स्थलस्य उपलभ्यता आरक्षणीया भवति । यात्रिकाः अपि पानाय अल्पकालिकम् एव प्रवेशम् अर्हन्ति तत्र । एतादृशे उपाहारगृहे गते अगस्ट्मासे अपूर्वौ उभौ अतिथी आकस्मिकतया उपस्थितौ । तयोः प्रवेशं दृष्ट्वा परिचारिकाः, ग्राहकाः, यात्रिकाः च आश्चर्यचकिताः दिग्भ्रान्ताः च । किञ्चित्कालानन्तरम् उपाहारगृहस्य जनाः एकं काचकद्वारं भञ्जयित्वा बहिः गत्वा तयोः उपरि वस्त्राणि पातितवन्तः । ततः व्यवस्थापकः परिसरविभागीयानां सम्पर्कं कृतवान् । परिसरविभागीयाः झटिति आगत्य तौ पञ्जरेषु बद्धवन्तः । तौ अतिथी आस्तां - तरक्षुव्याघ्रौ !!

## शुनकीयं पयोहिमम् !!

यदि भवन्तः जपानदेशं गच्छन्ति तर्हि अकागिनियोगोसंस्थया निर्मितानि पयोहिमानि खादन्ति प्रायः । एषु दिनेषु तया संस्थया नूतनविधानि पयोहिमानि सज्जीकृतानि सन्ति । शुनकोपयोगाय अपि एकं पयोहिमं सज्जीकृतम् अस्ति तेन । तस्य पार्थक्येन नाम न निश्चितम् । पयोहिमपात्रस्य उपरि लिखितं भवति - 'डोगीस् ऐसक्रीम्' इति । सामान्येषु पयोहिमेषु 'लेक्टोस्'-नामकं द्रव्यं भवति । तच्च शुनकैः जीर्णीकर्तुं न शक्यम् । अतः लेक्टोस्रहितं पयोहिमं निर्मितम् अस्ति संस्थया । सा वदति - ''एतत् शुनकीयं पयोहिमं मानवैः अपि खादितुं योग्यम् अस्ति एव'' इति । एतस्मिन् मधुरांशः न्यूनः भवति । मधुमेहपीडिताः एतस्य सेवनं कर्तुम् अर्हन्ति इति संस्था वदति । किन्तु जनाः एतत् पयोहिमम् आधिक्येन न क्रीणीयुः । यतः तस्य मूल्यं भवति - १५ डालराणि ! (तन्नाम ७५० रूप्यकाणि !)



# मध्यप्रदेशीया जानपदकथा

मध्यप्रदेशः इति नाम एव सूचयति यत् एतत् राज्यं देशस्य मध्यभागे अस्ति इति । एतत् राज्यं खनिजद्रव्यैः वन्यसम्पदा नैसर्गिकसम्पदा च परिपूर्णम् अस्ति ।

मध्यप्रदेशः विन्ध्यपर्वतश्रेण्या सातुरापर्वतश्रेण्या च परिवृतः अस्ति । नर्मदा, तपती, चम्बल्, सोने, महानदी, इन्द्रावती इत्यादयः नद्यः एतेभ्यः पर्वतेभ्यः उत्पद्यन्ते । एतस्मिन् राज्ये प्रवहन्त्यः ताः राज्यस्य सौन्दर्यं समृद्धिं च वर्धितवत्यः सन्ति ।

पूर्वतनराजानां संस्थानानि इदानीम् एतस्य राज्यस्य अङ्गानि जातानि सन्ति । १९२० तमे वर्षे एषः प्रदेशः आंग्लेयैः स्वाधीनीकृतः, 'सेण्ट्रल् प्राविन्स्' इति नाम्ना निर्दिष्टः च । १९५६ तमे वर्षे मध्यप्रदेशराज्यं रूपितं जातम् । २००१ तमे वर्षे छत्तीसगढनामकं नूतनं राज्यम् एतस्मात् पृथग्भूतम् ।

मध्यप्रदेशस्य विस्तारः अस्ति - ३०८,००० चतुरस्रकिलोमीटरात्मकः । अत्रत्या जनसङ्ख्या अस्ति ६,०३,८५, ११८ मिता । हिन्दी एतस्मिन् राज्ये आधिक्येन प्रयुज्यते । भोपालनगरम् एतस्य राजधानी अस्ति ।

मध्यप्रदेशे गिरिजनादिजातयः आधिक्येन सन्ति । तादृशीषु जातिषु काश्चन यथा - गोण्ड, भिल्ल, ओरियन्, धङ्का, धङ्गाड्, पनिका, सहारिया इत्यादयः ।

## सिङ्घिसुर्वः पालिबिर्वः च

इदानीं यः प्रदेशः मध्यप्रदेशत्वेन निर्दिश्यते तस्मिन् पूर्वं प्रमुखं राज्यद्वयम् आसीत् । उभयम् अपि गोण्डकुलीयानाम् एव । तयोः एकस्य नाम पलिनगिरिः इति । तत् राज्यं सिङ्घिवर्येण पाल्यते स्म । सः विविधाः तान्त्रिकविद्याः जानाति स्म । अतः जनाः तस्य स्तुतिपराणि गीतानि गायन्तः तं 'सिङ्घिसुर्वः' इति स्तुवन्ति स्म । 'बुद्धिमान् सिङ्घिः' इति तस्य पदस्य अर्थः । अन्यस्य गोण्डराज्यस्य नाम 'बेरार' इति । तत् राज्ञा भोगिबिलवर्येण पाल्यते स्म ।



तदीयदुर्गस्य नाम 'चन्दा' इति ।

सिङ्घिसुर्ववर्यस्य पालिनामकः कश्चन तरुणः पुत्रः आसीत् । बाल्यात् एव सः अपूर्वं शौर्यं प्रदर्शितवान् आसीत् । सः अनेकाः विद्याः सम्पादितवान् आसीत् । अतः सिङ्घिः तत्पत्नी च तस्य विषये विशेषाभिमानं वहतः स्म । तौ पुत्रस्य विवाहं कर्तुम् इच्छन्तौ योग्यां वधूम् इच्छतः स्म । 'अस्माकं पुत्रस्य पत्नी सामान्या न स्यात् । सा अपूर्वा स्यात्' इति राज्ञी सर्वदा वदति स्म ।

राज्ञः दूताः वार्ताम् आनीतवन्तः यत् राज्ञः भोगिबिलस्य गैला नाम पुत्री अस्ति, सा पालिबिर्वाय योग्या वधूः इति । एतां वार्तां श्रुत्वा सिङ्घिसुर्वः नितरां सन्तुष्टः । सः निश्चितवान् यत् विवाहसम्बन्धनिश्चयाय मया स्वयं गन्तव्यम् इति ।



सः बेरारदेशं प्रति गमनाय स्वस्य विशिष्टं हंसधरनामकम् अश्वं सज्जीकृतवान् । हंसधरः न सामान्यः अश्वः । सः निर्भीकः, शक्तिमान्, विश्वासार्हः च आसीत् एव । तेनैव सह सः उड्डयनसमर्थः सम्भाषणसमर्थः चापि आसीत् । तम् आरुह्य प्रस्थितवान् सिङ्घिः ।

राज्ञः भोगिबिलस्य दुर्गात् बहिः एकम् उद्यानम् आसीत् । राज्ञः मेलनात् पूर्वम् आत्मानं वेषभूषादिभिः सज्जं कर्तुम् इच्छन् सिङ्घिः तस्मिन् उद्याने अवतीर्णः । यदा रात्रौ सः तत्र शयनं कृतवान् तदा तदीयः अश्वः हंसधरः उद्याने बहूनि सस्यानि अखादत् ।

# इतिहासः

मध्यप्रदेशस्य इतिहासः सुदीर्घः वर्णरञ्जितः च । चक्रवर्ती अशोकः उज्जयिनीतः स्वस्य राज्यविस्तारम् आरब्धवान् । क्रि.श. ३०० तः क्रि.श. ५५० पर्यन्तम् मध्यप्रदेशराज्यं गुप्तराजानाम् अधीनम् आसीत् । सप्तमे शतके एतत् राज्ञः हर्षवर्धनस्य अधीनं जातम् । एकादशे शतके मुस्लिम्-आक्रामकाः एतत् राज्यं वशीकृतवन्तः । १६ शतकस्य उत्तरार्धं यावत् एतत् मोगलराजानाम् अधीनम् आसीत् । मराठाः अपि एतं प्रदेशं वशीकृतवन्तः । एतस्मिन् एव राज्ये जाताः काश्चन राज्ञ्यः इन्दोरीया अहल्याबायी होलकर्, राज्ञी दुर्गावती, राज्ञी कमलादेवी इत्यादयः उल्लेखार्हां ख्यातिं सम्पादितवत्यः दृश्यन्ते ।

स्वेच्छया सञ्चरन् बहूनि सस्यानि अनाशयत् च । अनन्तरदिने राज्ञा भोगिबिलवर्येण एषा वार्ता ज्ञाता । सः नितरां क्रुद्धः सन् – ''सः कः अश्वारोही अस्माकम् उद्यानं नाशितवान् ? कियत् धैर्यं तस्य ?'' इति वदन् सिङ्विवर्यस्य ग्रहणाय सैनिकान् प्रेषितवान् ।

सैनिकाः उद्यानं गत्वा सिङ्विम् उत्थापितवन्तः । सिङ्विः किञ्चित् उत्थाय – ''अहं पलिनगिरेः राजा सिङ्विः अस्मि । मम पुत्राय पालये योग्यां वधूम् अन्विष्य अहम् अत्र आगतः । राजकुमारी गैला स्नुषा भवतु इति मम इच्छा'' इति उक्त्वा पुनः शयनम् अकरोत् ।

भटाः एतं विषयं राजानम् उक्तवन्तः । राजा भोगिबिलः सर्वं श्रुत्वा कोपेन – ''याचकः इव आगतस्य पुत्राय मम पुत्री कथं दीयेत ? सर्वथा अशक्यम् एतत् । सैन्यं सज्जीक्रियताम् । सप्ताहाभ्यन्तरे सः उद्याननाशकः कारागारे स्थापनीयः । एतं विषयं तं वदन्तु अपि'' इति अवदत् ।

भोगिबिलस्य सैनिकाः यदा एतां वार्ताम् उक्तवन्तः तदा सिङ्विः किञ्चिदपि न भीतः । सः सप्ताहं यावत् उद्याने सुखेन सुप्तवान् । अष्टमे दिने यदा भोगिबिलस्य सैन्यं तं ग्रहीतुम् आगच्छत् तदा सः शय्यातः उत्थाय अतीन्द्रियशक्तीः स्मृतवान् । तदा देवताः, पिशाचाः, राक्षसाः, वन्यपशवः इत्यादयः तत्र उपस्थिताः । उभयोः पक्षयोः घोरं युद्धं प्रवृत्तम् ।

बेरारसैन्यं पूर्णतया विनष्टं जातम् । अतः सिङ्विसाहाय्यार्थम् आगताः देवपिशाचादयः अदृश्यतां गताः । यतः तेषाम् आगमनस्य उद्देशः सिद्धः आसीत् । तदनन्तरं भोगिबिलः

## कला करकौशलं च



मध्यप्रदेशे तनुगात्राः शाटिकाः प्राधान्येन निर्मीयन्ते । चन्देरी-महेश्वरीनामिकाः कार्पासकौशेयशाटिकाः तावत् जगत्प्रसिद्धाः । कार्पासकौशेयमय्यः महेश्वरीशाटिकाः अतिसरलेन चित्रविन्यासेन विशिष्टेन वर्णसंयोजनेन च ख्यातिं गताः सन्ति ।

अत्रत्यानि वराटिकाभिः मणिभिः पक्षैः च निर्मितानि वन्यजनसम्प्रदाययुक्तानि जानपदाभरणानि अतिजनप्रियाणि सन्ति । एतानि सर्वाणि कलोपेतानि वैशिष्ट्यपूर्णानि च भवन्ति । अत्रत्यानि आभरणानि सुवर्णेन, रजतेन, पित्तलेन, अन्यैः मिश्रलोहैः वा निर्मितानि भवन्ति ।

एतस्मिन् राज्ये धातुनिर्मिताः पेटिकाः, दीपाः, स्थाल्यः, लघुप्रतिमाः इत्यादीनि हस्तनिर्मितवस्तूनि अपि उपलभ्यन्ते । ग्वालियरे भोपाले च निर्मीयमाणानि वस्त्रनिर्मितानि पाञ्चालिकाप्रभृतीनि अन्ताराष्ट्रियस्तरे प्रसिद्धानि सन्ति । विविधैः वन्यजातीयैः निर्मीयमाणानि पिथोरा-लिपै-प्रभृतीनि भित्तिचित्राणि अपि अतिप्रसिद्धानि भवन्ति ।

सिद्धिं सम्मुखीकर्तुं स्वयम् उपस्थितः ।

सिद्धिः पूर्णविश्रान्तिं प्राप्य सन्नद्धः सन् हंसधरम् आरुह्य युद्धार्थं प्रवृत्तः । दीर्घकालं यावत् तयोः युद्धं प्रवृत्तम् । उभौ अपि दृढतया तिष्ठन्तौ युद्धं कृतवन्तौ । किन्तु हन्त, एकस्मिन् दिने हंसधरः स्खलितः सन् अपतत् । तस्मात् सिद्धिः अपि भूमौ अपतत् । वस्तुतः तत्र राज्ञः भोगिबिलस्य जनैः पूर्वम् एव गर्तः निर्मितः आसीत् रहसि ।

भोगिबिलः दुर्गस्य उपरि स्थित्वा उच्चैः विजयध्वनिं कृतवान् । स च ध्वनिः पर्वतेषु प्रतिध्वनितः अभवत् । समग्रः देशः एतं विजयोत्सवम् आचरत् । भोगिबिलसैनिकैः सिद्धिः आकृष्य नीतः, प्रकाशरहिते आहाररहिते च कारागारे स्थापितः च ।



हंसधरः कारागारं प्रति नीयमानं स्वामिनम् अपश्यत् । तस्य नयनं निवारयितुं महान्तं प्रयत्नम् अकरोत् । किन्तु तस्य प्रयासाः विफलाः जाताः ।

सैनिकाः उक्तवन्तः - ''इतःपरं भवान् स्वामिनं द्रष्टुं न अर्हति । एतस्य अन्तिमसंस्कारः करणीयः इति एतदीयां पत्नीं पुत्रं च वदतु'' इति । एतत् श्रुत्वा नितरां खिन्नः हंसधरः दुःखवार्तां वहन् स्वदेशम् अगच्छत् ।

सः स्वराज्यं प्रत्यागत्य सिद्धेः पत्नीं दृष्ट्वा अवदत् - ''महाराज्ञि ! अस्माकं स्वामी दिवं गतः'' इति । एतत् श्रुत्वा राज्ञी दुःखसागरे निमग्ना । पुत्रः पालिः अश्वेन कथितं श्रुतवान् आसीत् । सः मातरम् अवदत् - ''अम्ब ! भवती देशस्य राज्ञी अस्ति । राज्ञी कदापि दुर्बलहृदया न भवेत् । हंसधरः मृतं शरीरं तु न दृष्टवान् । अतः पिता मृतः न स्यात् अपि । स जीवति इत्येव वदति मम हृदयम् । अहं गत्वा तं बन्धविमुक्तं कृत्वा प्रत्यानेष्यामि'' इति ।

''भवान् इतोऽपि अल्पवयस्कः । यत्र पिता एव अयशस्वी जातः तत्र भवान् कथं यशस्वी भवेत् ?'' इति रुदती एव अपृच्छत् राज्ञी ।

पालिः तस्याः निषेधम् अनङ्गीकुर्वन् गमनाय सन्नाहं कृतवान् । स्वर्णमयं बाणवारकं धृत्वा खड्गम् अन्यानि कानिचन युद्धसाधनानि च स्वीकृतवान् सः । ततः हंसधरम् आहूय सः अवदत् - ''मित्र ! यत्र मम पिता अदृश्यः जातः तत्र मां नयतु'' इति ।

'मम स्वामी यत् वदति तत् युक्तम् एव स्यात् । यदि तथा स्यात् तर्हि वयं राजानं प्रतिप्राप्तुं शक्नुयाम अपि' इति विचिन्त्य हंसधरः स्वस्य मायापक्षौ प्रसार्य आकाशमार्गे

# ऐतिहासिकस्मारकाणि



मध्यप्रदेशे पुरातत्त्ववैभवं विशेषतः दृश्यते । तेषु खुजराहोस्थानि मन्दिराणि अतिप्रसिद्धानि । अत्रत्यानि ८५ मन्दिराणि स्वस्य कलावैभवेन शोभन्तेतराम् । साञ्चीस्थाः स्तूपाः अपि प्रसिद्धेषु अन्यतमाः । एते स्तूपाः मौर्यराजेन अशोकेन निर्मापिताः । ओर्चास्थेषु प्रासादेषु छदिषु भित्तिषु च यानि चित्राणि दृश्यन्ते तानि स्वस्य वर्णविन्यासवैभवेन सुशोभन्ते । मध्यप्रदेशे पूर्वोक्तानि वैशिष्ट्यानि अविहाय अल्पशः ज्ञातानि स्मारकाणि अपि बहूनि सन्ति ।

उड्डयनम् अकरोत् । तस्य पृष्ठभागे राजकुमारः तदीयानि साधनानि च आसन् ।

यदा मार्गार्धम् अतीतं तदा तौ जलपानाय नदीसमीपे अवतीर्णौ । नदीतीरे स्थितः पालिः कश्चन 'हिस्... 'शब्दं, क्रन्दनशब्दं च श्रुतवान् ।



समीपे एव कश्चन अजगरः गृध्रशावकयोः ग्रहणाय उद्युक्तः आसीत् । गृध्री च करुणक्रन्दनं करोति स्म । एतत् लक्षितवान् हंसधरः अवदत् – ''राजकुमार ! तौ पक्षिशावकौ रक्षतु । स्वराज्ये स्थितानां पशूनां पक्षिणां च अपायस्य निवारणं राजकुमारस्य भवतः आद्यं कर्तव्यम्'' इति ।

पालिः क्षणाभ्यन्तरे वृक्षम् आरुह्य तम् अजगरम् अमारयत् । तदा गृध्री तत्र आगता । सा गृध्रराज्ञी आसीत् । सा राजकुमारम् अवदत् – ''एतस्मात् दुष्टात् अगजरात् मम पुत्रौ रक्षितौ यत् तदर्थम् अनेके धन्यवादाः । एषः दुष्टः एतावता मम दश पुत्रान् खादितवान् आसीत् । भवता महान् उपकारः कृतः । अतः मम आशीर्वादाः भवन्तं रक्षिष्यन्ति । तथैव मम शक्तिः, अरण्यस्थाः सर्वे मदधीनाः पक्षिणः च सदा भवतः साहाय्यं करिष्यन्ति'' इति ।

ततः पालि-हंसधरयोः प्रयाणम् अनुवृत्तम् । अचिरात् एव हंसधरः पालिं तत् उद्यानं नीतवान्, यत्र च राजा सिद्धिः विश्रान्तिं

स्वीकृतवान् आसीत् । 'अहम् अत्र विश्रान्तिं स्वीकरिष्यामि । श्वः भोगिबिलं सम्मुखीकरिष्यामि' इति अचिन्तयत् पालिः । ततः सः स्वस्य स्वर्णमयं पटमण्डपं प्रसार्य तस्य अन्तः सुवर्णमुक्तामयीं शय्यां प्रसारितवान् । तदुपरि कौशेयाच्छादकं प्रसार्य सुखेन शयितवान् सः । रात्रौ सुवर्णमयपटमण्डपस्य तेजः तत्र सर्वत्र प्रसृतम् । दुर्गस्थाः भोगिबिलः, तदास्थानजनाः च तत् प्रखरं तेजः दृष्ट्वा आश्चर्यचकिताः । तेषां नेत्रे निमीलिते जाते ।

तस्य प्रखरतेजसः कारणं ज्ञातुम् अनन्तरदिने प्रातः भोगिबिलः यावत् स्वस्य भटान् प्रेषितवान् तावता पालिः युद्धाय सन्नद्धः सन् स्थितः आसीत् । सः स्वस्य पटमण्डपं पुटीकृत्य उद्याने



सम्यक् आवरणेन आच्छाद्य भोगिबिलस्य प्रासादं प्रति प्रस्थितवान् ।

आस्थानं प्रविशतः तस्य ग्रहणाय सैन्यम् आज्ञापितवान् भोगिबिलः । किन्तु सा आज्ञा अकिञ्चित्करी जाता ।

हंसधरः पालिः च भोगिबिलस्य महतीं सेनां विभिद्य अग्रे गतवन्तौ । विरोधं कृतवतः सैनिकान् नाशयन्तौ तौ भोगिबिलस्य पुरतः स्थितवन्तौ । पालिः स्वस्य खड्गेन भोगिबिलस्य शिरः कर्तितवान् । राज्ञः मरणात् सर्वे सैनिकाः शरणम् आगताः ।

ततः पालेः आज्ञायाः अनुगुणं सैनिकाः तं कारागारं प्रति नीतवन्तः । पालिः पितरं बन्धविमुक्तं कृतवान् । सिङ्गिः पुत्रम् आलिङ्ग्य आनन्दाश्रूणि स्रावितवान् ।

एतदनन्तरं पालिः सिङ्गिः च भोगिबिलस्य पुत्र्या गैलया सह हंसधरम् आरुह्य पलिनगिरिं प्रति प्रस्थितवन्तौ ।

## पन्नाजनपदीया वज्रखनी

आ बहोः कालतः,तन्नाम आ बहुभ्यः शतकेभ्यः, वज्रम् उत्पाद्यते भारते । दक्षिणाफ्रिकादेशे यावत् वज्रोपलब्धिः न भवति स्म तावत् भारतम् एव अद्वितीयं वज्रोत्पादकं राष्ट्रम् आसीत् जगति । अस्माकं देशे स्थिता अद्वितीया वज्रखनी पन्नाजनपदे मझगावनप्रदेशे अस्ति । भारतीयखनिजसंस्था अनुमिनोति यत् तस्यां खन्यां लक्षाधिकक्यारेट्परिमितं वज्रम् अस्ति इति । इदानीं भारतसर्वकारीयं राष्ट्रियखनिजअभिवृद्धिसंस्थानं वज्रोत्पादनकार्यं करोति । पन्नाजनपदे ८० कि.मी.विस्तीर्णतायुक्ते प्रदेशे वज्रखन्यः प्रसृताः सन्ति ।

# भारतम् अवगम्यताम्

अन्येषु देशेषु यावन्तः उत्सवाः ततोऽपि अधिकाः उत्सवाः सन्ति भारते । अत्र कारणं बहवः मतधर्माः अत्र जन्म प्राप्तवन्तः, तथैव अन्यदेशेषु स्थितानि मतानि अत्र आश्रयम् अवाप्नुवन् । सप्टम्बर्-अक्टोबर्-नवम्बर्मासेषु उत्सवानां पङ्क्तिरेव भवति । अतः एतस्य मासस्य प्रश्नाः उत्सवान् अवलम्ब्य भवन्ति । एतेषाम् उत्तरदानाय प्रयत्नं कुर्वन्तु -

१. दक्षिणभारतस्य कश्चन प्रदेशः 'दसरा'पर्वणः कारणतः प्रसिद्धिं गतः । सः प्रदेशः कः ? तत्रत्यं वैशिष्ट्यं च किम् ?

२. रथानाम् आकर्षणस्य आरम्भात् पूर्वं केनचित् महाराजेन सम्मार्जन्या मार्गस्य सम्मार्जनं करणीयम् । एतत् कुत्र सम्भवति ? तस्य उत्सवस्य नाम किम् ?

३. स च उत्सवः कः, यस्य आरम्भः एकस्मिन् राज्ये वाताटोड्डायनद्वारा क्रियते, अपरस्मिन् च तण्डुलपाकद्वारा क्रियते । तयोः राज्ययोः नाम किम् ?

४. मुस्लिंजनाः देवदूतस्य मोहम्मदस्य पुत्रस्य हुसेनस्य हौतात्म्यं निमित्तीकृत्य पर्व आचरन्ति । तत् कस्मिन् दिवसे भवति ?

५. तस्य उत्सवस्य नाम किं, यस्मिन् दिने फारसीकाः झरोस्टर्वर्यस्य जन्मदिनम् आचरन्ति, यश्च उत्सवः फर्वदीनमासे (अगस्ट्-सप्टम्बर्मासयोः कदाचित्) भविष्यति ?

६. मधुरैनगरीयस्य 'चैत्रै'-उत्सवस्य वैशिष्ट्यं किम् ?

७. चेन्नैनगरे जनवरी-फेब्रवरीमासयोः कदाचित् उत्सवमूर्तिं वर्णमयालङ्कृते उडुपे संस्थाप्य उत्सवः आचर्यते । कः देवालयः एतम् उत्सवम् आचरति ? तत्रत्यः आराध्यदेवः कः ?

८. गोवाराज्ये होलिकापर्व केन नाम्ना आचर्यते ?

*(उत्तराणि अग्रिमे मासे)*

### *'सप्टम्बर्'मासस्य प्रश्नानाम् उत्तराणि*

१. मेघनादशाहः ।
२. बिषप् काटन् ।
३. बृहस्पतिम् ।
४. आर्यभटः ।
५. थाम्सन् कालेज् आफ् इञ्जीनियरिङ्ग् ।
६. रूर्के विश्वविद्यालयः ।
७. इण्डियन् इन्स्टिट्यूट् आफ् मेनेजमेण्ट्, अहमदाबादनगरे ।
८. के. एम्. पणिक्कर् ।



# विघ्नेश्वरः

गङ्गापार्वत्योः विरसः दिने दिने वर्धति स्म ।

एतदवसरे एव गङ्गामेला सम्प्राप्ता । तदा नारदमुनिः पार्वतीम् उक्तवान् – ''एतस्मिन् गङ्गामेलावसरे गङ्गायां त्रिकोटिदेवाः स्नानं करिष्यन्ति । तत्कारणतः तेषां वैशिष्ट्यानि गङ्गायां सङ्क्रान्तानि भविष्यन्ति । भवती अपि तदवसरे तत्र स्नानं करिष्यति चेत् समग्रं जगत् भवत्याः विशालहृदयतायाः दयालुतायाः च प्रशंसां करिष्यति'' इति ।

ततः सः गङ्गासमीपं गत्वा अवदत् – ''देवि ! भवत्याः पावित्र्यं वर्धयितुं पार्वती भवत्यां स्नानं करिष्यति'' इति ।

''एवम् ! किं स्वस्य दयालुतां ख्यापयितुम् आगच्छन्ती अस्ति सा ? आगच्छतु नाम । यत् करणीयं तदहं करिष्यामि'' इति महता क्रोधेन अवदत् गङ्गा ।

पार्वती नदीतीरम् आगत्य पुष्पैः नदीम् अभ्यर्च्य यावत् स्नानं कर्तुम् उद्युक्ता तावता गङ्गा तत्र उपस्थाय क्रोधेन अवदत् – ''अलं स्नानेन । मां मालिनां मा करोतु'' इति ।

''मम स्नानेन भवत्याः मलिनता कथं भवेत् ? भवत्याः महिमा वर्धेत'' इति उक्तवती पार्वती ।

''वन्ध्यायाः स्नानेन मम मालिन्यं वर्धेत एव । भवत्याः पुत्रः कुमारस्वामी शरवणे जन्म प्राप्तवान् । अपरः पुत्रः गजाननः मृत्तिकापिण्डतः जातः । भवत्याः गर्भतः न कोऽपि उत्पन्नः । अतः भवती वन्ध्या एव'' इति अवदत् गङ्गा ।

''मयि वन्ध्यात्वम् आरोपयन्त्याः भवत्याः



कियत् धैर्यम् ! अहं का इति स्मरति खलु भवती ? अहमस्मि परशिवस्य अर्धाङ्गिनी'' इति उक्तवती पार्वती ।

''कुतो न ज्ञायेत ? विवाहसमनन्तरम् एव पत्युः अर्धभागं स्वाधीनीकृतवती भवती परमपातकी एव'' इति निन्दितवती गङ्गा ।

''मां निन्दन्ती भवती किं श्रेष्ठा ? अधःपतनं प्राप्तवती भ्रष्टा भवती'' इति अवदत् पार्वती ।

''यदा शिवः हालाहलं पीतवान् तदा तत् विषं शिवस्य कण्ठे महान्तं तापम् अदर्शयत् । तदवसरे मया शीतलता कल्पिता । अतः एव शिवः मां शिरसि धृतवान् । समग्रः लोकः एव जानाति यत् अहं भ्रष्टा, उत शिवस्य अनुग्रहपात्रतां गता इति'' इति अवदत् गङ्गा ।

''अहो महापातिव्रत्यं भवत्याः !! कश्चित् भवतीम् आहूतवान् । तम् एव अनुसृत्य निर्गतवती भवती । अनाथताकारणतः शिवस्य शिरः आश्रितं भवत्या'' इति प्रत्युक्तवती पार्वती ।

''प्राणिनां बलिम् अपेक्षमाणा निर्दया भवती अस्पृश्या मातङ्गिनी कर्कशहृदया शक्तिः'' इति उपहसितवती गङ्गा ।

''आम्, अहं शक्तिः अस्मि, महाशक्तिः अस्मि'' इति वदन्ती पार्वती आवेशं प्राप्तवती । तदा प्रलयकालीनः प्रभञ्जनः उद्भूतः । मेघाः अगर्जन् । पृथिवी कम्पमाना जाता । हिमशिलाः द्रवताम् अवाप्नुवन् । समग्रायां पृथिव्यां कोलाहलः उत्पन्नः ।

पार्वत्याः आवेशं दृष्ट्वा गङ्गा उक्तवती - ''भवती मां शीतलां शान्तां भावयन्ती उपहसन्ती अस्ति । भवती विस्मृतवती अस्ति यत् अहं जलशक्तिः अस्मि इति । मां कोपयन्ती महत् पापं सम्पादितवती अस्ति भवती'' इति । ततः सा भीषणप्रवाहरूपं प्राप्य समग्रम् उत्तरभारतं जलमयं कृतवती ।

देवताः आकाशे स्थित्वा एतत्सर्वं दृष्ट्वा चिन्तितवन्तः यत् देव्योः एषः कलहः प्रलयम् एव उत्पादयिष्यति इति । एतस्य कारणीभूतं नारदं निन्दितुम् उद्युक्ताः अभवन् ते ।

तदवसरे दक्षिणभारतात् प्रत्यागच्छन् विघ्नेश्वरः मध्येमार्गं मिलितं नारदं दृष्ट्वा अवदत् - ''भोः कलहप्रिय ! कीदृशः उपद्रवः उपस्थापितः भवता !'' इति ।

तदा नारदः - ''एतादृशः महोपद्रवः उपस्थितः भवति चेदेव ज्ञायते यत् जगतः

कल्याणाय परिश्रमं कः करोति इति'' इति उक्त्वा ततः निर्गतवान् । विघ्नेश्वरः अपि कैलासं प्राप्तवान् ।

कैलासे पार्वती पश्चात्तापम् अनुभवन्ती चिन्तयन्ती आसीत् – 'यावत् अन्यः भगीरथः उत्पन्नः भूत्वा गङ्गाम् अन्यत्र न नेष्यति तावत् एषः उत्पातः कथमपि शान्तः न भविष्यति' इति ।

पार्वत्याः स्वगतवचनम् एतत् विघ्नेश्वरः श्रुतवान् । सः पार्वतीं प्रणम्य अवदत् - ''अम्ब ! अहम् एकं पुण्यकार्यं कर्तुम् उद्युक्तः अस्मि । आशीर्वादं करोतु'' इति ।

''विघ्नेश्वरेण सङ्कल्पिते कार्ये विघ्नम् उत्पादयितुं कस्य वा धैर्यं स्यात् ? वत्स ! भवान् दक्षिणभारततः आगतः खलु ? कः विशेषः तत्र ?'' इति पृष्टवती पार्वती ।

''अम्ब ! विन्ध्याचलस्य अनन्तरं समग्रा भूमिः शुष्का अस्ति । सः प्रदेशः सस्यश्यामलः स्यात् । भवत्याः 'अन्नपूर्णा' इति नाम सार्थकं स्यात् इति मम इच्छा । यदि गङ्गा तस्मिन् प्रदेशे प्रवहन्ती भवेत् तर्हि महान् लोकोपकारः स्यात्'' इति अवदत् विघ्नेश्वरः ।

''अहं किं वा वदेयम् ? सर्वं सम्भवेत् विश्वनाथस्य कृपया'' इति अवदत् पार्वती ।

''सर्वं भगवतः अधीनम् इति विचिन्त्य मौनेन स्थातुं न शक्यते अम्ब ! अस्माकं प्रयत्नः अपि यथायोग्यं स्यात्'' इति उक्तवान् विघ्नेश्वरः ।

''प्रयत्नः तु अवश्यं भवेत् । तत्रापि भवादृशस्य सहयोगः यदि भवेत् तर्हि कार्यं



निश्चयेन सिद्धं भवेत्'' इति अवदत् पार्वती ।

''अम्ब ! भवत्याः मुखतः एतदेव श्रोतुम् इच्छामि स्म अहम् । इदानीं प्रस्थानाय अनुज्ञां ददातु कृपया'' इति उक्त्वा पुनरपि पादस्पर्शपूर्वकं नमस्कृत्य विघ्नेश्वरः महर्षेः गौतमस्य आश्रमं प्रति प्रस्थितवान् ।

गौतममुनिः पश्चिमपर्वतश्रेण्याम् आश्रमं निर्माय कृषिकार्ये निरतः आसीत् । विघ्नेश्वरः गर्भिणीधेनुरूपेण परिवृत्तः सन् तत्र गतः ।

क्षेत्रस्थानि सस्यानि नाशयन्तीं धेनुं दूरं प्रेषयितुम् इच्छन् मुनिः तां कमण्डलुजलेन प्रहृतवान् । जलबिन्दुस्पर्शात् एव धेनुः मूर्च्छां प्राप्य भूमौ पतितवती । तस्याः उज्जीवनार्थं गौतमः स्वस्य समग्रां तपश्शक्तिं व्ययीकृतवान् । तथापि सा न उज्जीविता जाता ।

एतदवसरे नारदः इन्द्रं जागरितवान् । इन्द्रः



गौतमविषये कुपितः आसीत् । ब्रह्मदेवेन अपूर्वसुन्दरी अहल्या सृष्टा आसीत् । इन्द्रः तस्याः सौन्दर्यं दृष्ट्वा व्यामुग्धः जातः । बहवः तां प्राप्तुं समुत्सुकाः आसन् । अतः ब्रह्मा नियमं कृतवान् यत् यः भूदेव्याः प्रदक्षिणं समाप्य आदौ प्रत्यागमिष्यति तस्मै एव सा दास्यते इति ।

गौतमः गर्भिण्याः धेन्वाः प्रदक्षिणं कृत्वा प्रत्यागतवान् । भूमण्डलस्य प्रदक्षिणतः यत् फलं तदेव फलम् एतस्मात् अपि प्राप्तम् अस्ति इति वदन् ब्रह्मा गौतमाय एव अहल्यां समर्पितवान् । गर्भिणी धेनुः भूदेवीसमाना इति उक्तवान् एव गर्भिणीं धेनुं मारितवान् अस्ति इत्यतः प्रतीकारसाधनाय इन्द्रः उत्तमम् अवसरं प्राप्तवान् आसीत् ।

अतः सः मुनिवेषं धृत्वा लोकेषु सञ्चरन् प्रचारं कृतवान् - ''गौतममुनिः गोहत्यां कृतवान् महापापी अस्ति । एतत्कारणतः तदीयः आश्रमः अपवित्रः जातः अस्ति । अतः यः तस्य आश्रमं गमिष्यति, यो वा तं द्रक्ष्यति सः अपि पापेन लिप्तः भविष्यति । एतस्य पापस्य परिहारार्थं स्थितः एकः एव उपायः नाम - गङ्गा एतस्याः धेन्वाः उपरि प्रवहेत् इति । अन्यः उपायः एतदर्थं नास्ति सर्वथा'' इति ।

सर्वे मुनयः इन्द्रस्य एतस्मिन् वचने विश्वासं कृतवन्तः । अतः ते गौतमस्य बहिष्कारं कृतवन्तः । तदाश्रमवासिनः सर्वे आश्रमं परित्यज्य गताः अपि ।

क्व गङ्गा ! क्व च पश्चिमपर्वताः !! तथापि निराशताम् अप्राप्नुवन् गौतमः भगीरथम् एव अनुकुर्वन् हिमालये उपविश्य गङ्गाम् उद्दिश्य घोरं तपः आरब्धवान् ।

कपिलमहामुनेः क्रोधाग्निना दग्धानां पूर्वजानाम् उद्धाराय पूर्वं भगीरथः तपस्यया गङ्गां सन्तोष्य स्वर्गलोकतः भूलोकम् आनीतवान् आसीत् । शिवः तां स्वस्य जटाजूटे धृतवान् आसीत् । शिवस्य जटाजूटे निबद्धां गङ्गां प्राप्तुं भगीरथः शिवम् उद्दिश्य तपः कृतवान् आसीत् । तदा सन्तुष्टः शिवः जटाजूटं किञ्चित् शिथिलीकृत्य गङ्गायाः एकां धारां भूमिं प्रति प्रेषितवान् आसीत् । एतस्य अनन्तरं गङ्गा महता वेगेन प्रवहन्ती हिमालयम् आप्लावयन्ती भगीरथं च अनुसरन्ती पूर्वस्यां दिशि गतवती आसीत् । अतः एव भागीरथी इत्यपि तस्याः नाम जातम् आसीत् ।

हिमालये प्रवहन्त्याः गङ्गायाः एका धारा

हिन्दुकुशपर्वतमालाम् अतिक्रम्य पश्चिमदिशि प्रवहन्ती इन्दुनदः इति नाम प्राप्तवती आसीत् । अनन्तरकाले तदेव नाम सिन्धुनदः इति परिवृत्तम् । पश्चिमोत्तरसीमायां प्रवहतः सिन्धुनदस्य कारणतः भारतवर्षस्य नाम 'हिन्दुदेशः' इत्यपि जातम् ।

वेगेन प्रवहन्ती गङ्गा जह्नुमुनेः आश्रमस्य समीपम् आगता । तदा जह्नुमुनिः स्वस्य आश्रमस्य रक्षणाय गङ्गां पीतवान् । जह्नुमुनेः कर्णात् निर्गता गङ्गा 'जाह्नवी' इति नाम अपि प्राप्तवती । एतदनन्तरं कपिलाश्रमं प्राप्तवती सा भगीरथस्य पूर्वजानां शरीरस्य भस्मनः उपरि प्रवहन्ती तान् सद्गतिं प्रापितवती । एवं भगीरथस्य श्रमः सफलतां गतः आसीत् ।



तम् एव भगीरथम् अनुकुर्वता गौतमेन कृतेन तपसा सन्तुष्टा भागीरथी गौतमेन सह प्रस्थितवती । मार्गे तस्याः पदचिह्नानि यत्र यत्र अङ्कितानि तत्र सर्वत्र झर्यः लघुनद्यः वा उत्पन्नाः ।

गौतमस्य आश्रमं प्राप्तवती गङ्गा प्रवाहरूपं प्राप्तवती । गौतमः मार्गं दर्शयन् अग्रे गतवान् । गङ्गा धेन्वाः उपरि प्रवहन्ती 'गौतमी' इति नाम प्राप्तवती । गङ्गाप्रवाहस्पर्शतः मायाविनी गौः उत्थाय, आकाशदिशि गता सती क्षणाभ्यन्तरे अदृश्या जाता । तत्र विघ्नेश्वरः प्रत्यक्षः जातः ।

विघ्नेश्वरः गङ्गां प्रणम्य - ''अम्ब ! मां क्षाम्यतु कृपया । मया एव एतत् कार्यं कृतम् । भवत्याः पवित्रजलतः विन्ध्याचलस्य अपर-पार्श्वे स्थिताः प्रदेशाः सस्यश्यामलाः भवेयुः इत्यतः एव मया एवं कृतम् । भवती 'दक्षिण-भारतस्य गङ्गा' इति ख्यातिं प्राप्स्यति । 'गोदावरी'नाम्ना भवती ख्याता भविष्यति'' इति उक्त्वा विविधैः स्तोत्रैः तां तोषयित्वा अदृश्यतां गतः ।

गोदावरी उपनदीभिः समेता सती पूर्वस्यां दिशि प्रवहन्ती पूर्वीयप्रदेशान् सस्यश्यामलान् कृतवती । सप्तर्षयः देवताः च गोदावर्यां स्नानं कृतवन्तः । ते गौतमम् 'अपरभगीरथः' इति प्रशंसितवन्तः । ततः गोदावरी सप्तधा विभक्ता सती प्रवहन्ती पूर्वसमुद्रं प्राप्तवती ।

गङ्गा गोदावरीधारारूपेण यदा परिवर्तमाना आसीत् तदा तस्याः प्रसृताः श्यामलकेशाः पश्चिमघट्टे संलग्नाः । तदा विष्णुः स्वस्य अङ्गुलीभिः तान् पर्वततः पृथक्कृतवान् । कृष्णवर्णधारिणः विष्णोः अङ्गुलीनां मध्यतः निर्गता नदी 'कृष्णा' इति नाम प्राप्य पर्वततः

अग्रे गतवती ।

एवमेव आकाशतः पतन्त्याः गङ्गायाः एका लघुधारा दक्षिणे स्थितस्य कवेरमहामुनेः आश्रमे स्थिते कमण्डलौ पतिता सती कन्यारूपं प्राप्तवती । ततः अगस्त्यम् अनुसरन्ती अरण्येषु सञ्चरन्ती नदीरूपं प्राप्य 'कावेरी' इति नाम प्राप्य सुन्दरप्रपातम् निर्मान्ती दक्षिणभूभागे सञ्चारं कृतवती ।

एवं गौतमेन आनीता गङ्गा त्रिभिः प्रमुखधाराभिः युक्ता सती गोदावरी, कृष्णा, कावेरी चेति तिस्त्रः नदीः सृष्टवती ।

गङ्गायाः आगमनतः गौतममहर्षेः आश्रमः पुनरपि शोभां प्राप्नोत् । गोदावर्याः तटे अनेकानि पुण्यतीर्थानि स्थापितानि जातानि । गौतमस्य यशः सर्वासु दिक्षु प्रसृतम् । पश्चिमपर्वतप्रदेशे गङ्गायाः प्रवाहः असम्भवः इति मत्वा इन्द्रः यं प्रायश्चित्तविधिं सूचितवान् तं साधितवान् आसीत् गौतमः । एवम् असम्भवम् अपि साधितवन्तं गौतमं क्षमां प्रार्थितवान् इन्द्रः ।

किन्तु एतावता अपि गौतमः न सन्तुष्टः । यतः पूर्वम् इन्द्रस्य वञ्चनतः क्रुद्धः सः अहल्याम् उद्दिश्य - 'शिलारूपं प्राप्नोतु भवती' इति शापं दत्तवान् आसीत् । तदनन्तरकाले सः विन्ध्याचलम् अतिक्रम्य गत्वा पश्चिमपर्वतश्रेण्यां स्वस्य आश्रमं निर्माय वासम् आरब्धवान् आसीत् । गोदावर्याः उद्भवस्य अनन्तरं बहवः मुनयः तस्याः तीरे आश्रमं निर्मितवन्तः । अत्रिः नाम महामुनिः त्रिमूर्त्यनुग्रहात् पुत्रवान् जातः । अनसूया अतिथिभ्यः अन्नदानम् आरब्धवती ।

गौतमस्य आश्रमपरिसरे अपि फलसमृद्धिः उत्तमा एव आसीत् । तथापि अहल्यायाः अभावतः आश्रमः शोभाहीनः इव भासते स्म । अविवेकेन अहल्यायै शापः दत्तः यत् तदर्थं गौतमः पश्चात्तापम् अनुभवति स्म । एतत् दृष्ट्वा विघ्नेश्वरः तस्य पुरतः प्रत्यक्षीभूय अवदत् - ''महर्षिवर्य ! अचिरात् एव भगवान् विष्णुः रामचन्द्ररूपेण अवतारं प्राप्य शिलात्वं गताम् अहल्यां स्वपादरजसा मानवरूपधारिणीं विधास्यति । गोदावरीनद्याः उद्भवाय मया भवान् बहुधा क्लेशितः । इतःपरं गोदावरी भवन्नाम्ना सम्बद्धा सती गौतमी इति नाम्ना अपि ख्याता भविष्यति'' इति ।





# रामपुरस्य बन्धुता

रङ्गनाथनामकः कश्चित् वस्त्रवणिक् पूर्वम् आसीत् । तस्य आपणः विपण्याम् आसीत् । एकदा सः वाणिज्यं समाप्य आपणं पिधाय गृहं यदा आगतः तदा तस्य पुरतः हसन्ती आगता तस्य पत्नी सरला । पञ्चषेभ्यः दिनेभ्यः पूर्वम् अग्रजपुत्रस्य जन्मदिननिमित्तं गता सा तद्दिने एव मध्याह्ने आगता आसीत् मातृगृहतः ।

भोजनं परिवेषयन्ती सा रङ्गनाथम् उक्तवती – ''मम अग्रजेन आवयोः पुत्रस्य निमित्तं समीचीना कन्या काचित् दृष्टा अस्ति । तया सह लक्षरूप्यकात्मिका वरदक्षिणा अपि लभ्यते । किन्तु कन्या कृष्णवर्णीया । वस्तुतस्तु सौन्दर्येण किं वा प्रयोजनम् ?'' इति ।

तदा रङ्गनाथः उक्तवान् – ''कृष्णवर्णीयाः सुन्दर्यः न भवन्ति इति भवत्याः अभिप्रायः इति सिद्धम्'' इति ।

सरला हसन्ती किमपि वक्तुम् उद्युक्ता । तावति काले रङ्गनाथः एव पुनः उक्तवान् – ''ह्यः रामपुरग्रामतः राजेश्वरः नाम कश्चित् आगतः । तस्य पुत्रीम् अस्माकं पुत्रः कुत्रचित् विवाहावसरे दृष्ट्वा ताम् एव इष्टवान् अस्ति । अतः राजेश्वरः कथयति यत् मम गृहम् आगत्य मम पुत्रीं सकृत् भवन्तः पश्यन्ति चेत् समीचीनम् इति । ममापि तत् युक्तम् इति भाति'' इति ।

सरला विना प्रतिवचनं पतिमेव द्रष्टुम् उद्युक्ता । तयोः पुत्रः नगरे उन्नतोद्योगे आसीत् । कन्या सुन्दरी चेत् तस्याः मातापितरौ अधिकां वरदक्षिणां दातुं सिद्धाः न भवन्ति इति चिन्तनं सरलायाः ।

अतः सा – ''एकाकी गत्वा कन्यां दृष्ट्वा आगच्छतु भवान् । कन्यायाः पिता न्यूनातिन्यूनं लक्षं रूप्यकाणि दातुं सिद्धः चेत् अहमपि आगत्य तां द्रक्ष्यामि'' इति पतिं वदन्ती भोजनं समाप्य उत्थिता ।

रङ्गनाथः द्वित्रदिनानन्तरं रामपुरं गतः । तत्र कन्या दृष्टा तेन । सा अत्यन्तं सुन्दरी, सुशीला च आसीत् । कुटुम्बम् अपि संस्कारयुक्तम् आसीत् । किन्तु कन्यायाः पिता वरदक्षिणां दातुम् असमर्थः आसीत् । तथापि रङ्गनाथः – ''लक्षरूप्यकात्मिका वरदक्षिणा दत्ता चेत् एव विवाहः सम्भवेत्'' इति तम् उक्त्वा ततः प्रतिनिवृत्तः ।

आगमनसमये मध्येमार्गम् अन्धकारः प्रसृतः । तेन सह वृष्टिरपि आरब्धा । रङ्गनाथः तावता ग्रामस्य सीमां प्राप्तवान् आसीत् । तदा तेन एकं पुरातनं गृहं दृष्टम् । अतः सः 'वृष्टिस्थगनपर्यन्तम् अत्र तिष्ठामि' इति चिन्तयन् तत् गृहम् आगत्य द्वारशब्दं कृतवान् । द्वारं शनैः उद्घाटितम् । तत्र अन्तः अतीव कृशः कश्चित् वृद्धः हस्तेन दीपं गृहीत्वा स्थितः आसीत् । सः श्मश्रुलः आसीत् ।

तं पश्यन् रङ्गनाथः सङ्कोचेन पृष्टवान् – ''वृष्टिः आरब्धा । स्थगनलक्षणं न दृश्यते । अधिकमेव भवेत् इति भाति । अतः अहमद्य रात्रौ अत्र शयनं करवाणि किम् ?'' इति ।

''मम कापि आपत्तिः नास्ति । किन्तु आश्रयमात्रं दातुम् अर्हामि अहम् । भोजनादि-व्यवहारः सर्वथा न शक्यते । अत्र कापि महिला नास्ति'' इति रङ्गनाथम् अन्तः आह्वयन् सः वृद्धः उक्तवान् ।

प्रकोष्ठे शय्याद्वयं प्रसार्य सः वृद्धः पृष्टवान्





''मम नाम भूषणः । भवतः नाम किम् ? केन कारणेन भवान् एतं ग्रामं प्रति आगतः ?'' इति ।

रङ्गनाथः शय्यायाम् उपविशन् उक्तवान् - ''अहं सीतापुरनिवासी । रामपुरतः आगच्छन् अस्मि । दर्शनेन भासते यत् भवान् अनुभवी स्यात् इति । अतः अहं कमपि विचारं गोपयितुं न इच्छामि'' इति वदन् सः स्वस्य पूर्ण-विवरणम् उक्तवान् ।

''भवतः वचनेन ज्ञायते यत् भवत्पुत्रः रामपुरीयाम् एव कन्याम् इच्छति इति'' इत्येवं वदन् भूषणः अपि शय्यायाम् उपविष्टः ।

''तेन किम् ? वरदक्षिणादाने कन्यापितुः सामर्थ्यं नास्ति चेत् वयं किं वा कर्तुं शक्नुयाम ?'' इति वदन् रङ्गनाथः उच्चैः हसितवान् ।

एतत् श्रुत्वा क्षणं मौनम् आश्रितवान् भूषणः उक्तवान् - ''अहम् एतस्मिन् वार्धक्ये अनाथः इव अत्र किमर्थं जीवनं यापयन् अस्मि इति भवान् जानाति किम् ?'' इति ।

रङ्गनाथः शिरसः चालनेन 'न' इति सूचितवान् ।

''तर्हि शृणोतु । अहमपि मम पुत्रस्य विवाहसमये वरदक्षिणां स्वीकृतवान् । तदर्थं मम स्नुषायाः पिता परम्पराप्राप्तं गृहं विक्रीतवान् । एतस्मात् मम स्नुषा कुपिता । अतः मम विषये सा अनादरेण व्यवहरति स्म । मम पुत्रः अपि तस्याः अधीनः आसीत् । मम पत्न्याः मरणानन्तरं मम परिस्थितिः इतोऽपि शोचनीया अभवत् । एतत् सर्वं सोढुम् अशक्नुवन् मम बन्धोः पुरातनगृहे अस्मिन् वसन् अस्मि । किन्तु अत्र पाककर्ता

कोऽपि नास्ति । अनाथः इव अत्र दिनगणनां कुर्वन् अस्मि'' इति वदन् भूषणः अश्रूणि स्रावितवान् ।

एतत् श्रुत्वा रङ्गनाथः स्तब्धः अभवत् । तस्य मुखात् एकं पदमपि न निस्सृतम् । बहोः कालात् अनन्तरं निद्रा प्राप्ता तेन । प्रातः उत्थाय सः पश्यति ! भूषणः तत्र कुत्रापि न दृश्यते एव !!

रङ्गनाथः तस्मात् गृहात् प्रस्थितः । पुरतः काचित् वृद्धा वृक्षस्य अधः पतितानि फलानि अजैः खादयन्ती आसीत् । सा रङ्गनाथं दृष्ट्वा अपृच्छत् – ''भवान् कः ? आरात्रि तस्मिन् गृहे किं वासः कृतः भवता ? कियत् धैर्यं भवतः ?'' इति ।

रङ्गनाथः न ज्ञातवान् यत् वृद्धा किं वदन्ती अस्ति इति । सः वृद्धाम् अवदत् – ''रात्रौ महती वृष्टिः आसीत् । अनन्यगतिकः अहम् अत्र आश्रयं प्राप्तवान् । किन्तु अत्र स्थितः वृद्धः कुत्र गतः इति भवती जानाति किम् ?'' इति ।

रङ्गनाथस्य वचनं श्रुतवत्याः वृद्धायाः हस्ते स्थितः दण्डः अधः पतितः । आश्चर्ययुक्तेन स्वरेण सा उक्तवती – ''तर्हि ग्रामीणानाम् सन्देहे सत्यांशः अस्ति । ग्रामीणाः वदन्ति यत् वरदक्षिणापिशाचग्रस्तः भूषणः स्वयं पिशाचः भूत्वा अत्रैव वसति इति । वर्षात् पूर्वं तस्य मरणम् अत्रैव अभवत्'' इति ।

रात्रौ मया पिशाचेन सह उषितम् इति चिन्तनेनैव तस्य शरीरे कम्पनम् आरब्धम् । तदा एव तेन कश्चन निर्णयः स्वीकृतः । तत्क्षणे एव भाटकयानं स्वीकृत्य सः ततः प्रस्थितः ।

किञ्चित्कालानन्तरं वृक्षस्य पृष्ठभागे स्थितः भूषणः ततः आगच्छन् वृद्धाम् उक्तवान् – ''अम्ब ! मया उक्तं सर्वं समीचीनतया कृतं भवत्या । मम सर्वाणि वचनानि भवत्या समीचीनतया उक्तानि । वरदक्षिणानामकभूतेन ग्रस्तः सन् महत्शोचनीयां परिस्थितिं न प्राप्नुयात् सः'' इति ।

''मया कृतं कार्यं कथं पुण्यजनकम् अभवत् ? रङ्गनाथः वरदक्षिणाशां त्यक्ष्यति इत्यत्र किं प्रमाणम् ?'' इति पृष्टवती वृद्धा ।

''सः भाटकयाने उपविश्य रामपुरं प्रति प्रस्थितः इत्येतत् भवत्या किं न दृष्टम् ?'' इति भूषणः सोत्साहम् उक्तवान् ।





# ज्ञानी, अज्ञानी, मूर्खश्च

पण्डितः शिवानन्दः गुरुकुले शिष्यान् बोधयति स्म । सः न केवलं शास्त्राणि, अपि तु तैः सह लौकिकव्यवहारनिमित्तं यत् ज्ञानम् अपेक्षितं तदपि बोधयति स्म । तस्य अभिप्रायः एषः – 'शास्त्रेषु गभीरं पाण्डित्यम् अस्ति चेदपि जीवने सम्मुखीकरणीयानां समस्यानां परिहाराय लौकिकज्ञानम् अपि अत्यन्तम् आवश्यकम् । तदस्ति चेत् एव जीवनं सुखेन शान्त्या च यापयितुं शक्यते, नान्यथा' इति ।

एकदा सः त्रिभिः शिष्यैः सह प्रातःकाले एव औषधीयसस्यानि आनेतुं वनं गतः । शिष्येषु उभौ नूतनतया गुरुकुलं प्रविष्टौ आस्ताम् ।

गुरोः अनुगमनं कुर्वत्सु तेषु एकः नूतनः शिष्यः गुरुं पृष्टवान् – ''गुरुवर्य, सप्ताहात् पूर्वं मया कश्चन प्रश्नः पृष्टः यत् ज्ञानी, अज्ञानी, मूर्खः इत्येतेषु को भेदः इति । तदा भवता उक्तम् आसीत् यत् उचिते समये अस्य उत्तरं दास्यते इति'' इति ।

गुरुः शिवानन्दः मौनेन स्थितः । किमपि उत्तरं न दत्तं तेन । तेषु शिष्येषु यः पूर्वमेव शिष्यत्वेन आगतः, सः नूतनशिष्यविषये कुपितः सन् उक्तवान् – ''कदा कथम् उत्तरं दातव्यम् इति अस्माकं गुरुः स्वयं जानाति'' इति ।

तदा नूतनशिष्ययोः अन्यतरः अस्य अभिप्रायम् अनङ्गीकुर्वन् उक्तवान् – ''गुरुः अनेकविषयान् अस्मान् बोधयति । अतः सः अस्माभिः कृतस्य प्रश्नस्य उत्तरं वक्तुं विस्मृतवान् स्यात् । स्वस्य सन्देहस्य परिहाराय गुरोः पुनःस्मारणं न अपराधाय'' इति ।



शिवानन्दः जीवनस्य प्रमुखाणां समस्यानां निवारणविषये सोदाहारणं परिहारान् सूचयति स्म ।

गुरुः शिष्याः च आवश्यकानि औषधीय-सस्यानि सङ्गृहीतवन्तः । मध्याह्नसमये विश्रान्त्यर्थं कस्यचन वृक्षस्य अधः ते उपविष्टवन्तः ।

तदा एव त्रयः पथिकाः अपि विश्रान्त्यर्थं समीपस्थं वृक्षं प्रति आगताः । तेषां स्कन्धेषु बृहत्स्यूताः आसन् । त्रयः अपि प्रौढाः । ते त्रयः अपि स्कन्धेभ्यः स्यूतान् अधः भूमौ संस्थाप्य परितः दृष्टिं प्रसारितवन्तः । तेषु एकः वृक्षस्य समीपे स्थितम् एकं बिलं दृष्ट्वा भीतः सन् अवदत् - ''पश्यतु, तत्र किञ्चन बिलम् अस्ति । वयं तु बहु श्रान्ताः । निद्रायां मग्नान् अस्मान् कोऽपि सर्पः आगत्य दशेत् । जागरिताः भवामः इति चिन्तनमपि असाध्यमेव'' इति ।

''वयं त्रयः अत्र विश्रान्तिं स्वीकुर्मः । कोऽपि सर्पः आगतः चेत् त्रयः अपि मिलित्वा तं मारयिष्यामः'' इति स्यूतानाम् आच्छादनं निष्कासयन् कश्चित् अवदत् ।

तदा अन्यः पथिकः - ''भवन्तः किमपि वदन्तु नाम, अहं तु अत्र न शये । अन्यत्र कुत्रापि गत्वा विश्रान्तिं स्वीकरवाम, गच्छन्तु'' इति ततः प्रस्थितः सन् अवदत् ।

तदा तृतीयः मौनेन स्थातुम् अशक्नुवन् अवदत् - ''वने तादृशं स्थलमेव प्रायः न लभ्यते यत्र अपायः किञ्चिदपि न स्यात् । अतः यत्र अपायः न्यूनतया दृश्यते तादृशं स्थलम् अन्विष्यामः वयम् । मम अभिप्रायः अस्ति यत् एतानि सर्पाणां बिलानि न इति'' इति ।

''किं वदन् अस्ति भवान् ? पुरतः बिलं दृश्यमानमेव अस्ति । तथापि भवान् अङ्गीकर्तुं न सिद्धः किल । एषा अद्वैतभावना भवता कदा कुत्र अभ्यस्ता ?'' इति सकोपम् उक्तवान् अन्यः ।

एतानि वचनानि श्रुत्वा तृतीयः हसन् उक्तवान् - ''भोः, शान्तः भवतु । मम कथनं सम्यक् शृणोतु । सर्वेषु बिलेषु सर्पाः न भवन्ति । एतत् अनुभवजन्यं ज्ञानम् । अत्र स्थितानि बिलानि पिपीलिकानाम् एव स्युः, न तु सर्पस्य'' इति ।

अनेन वचनेन आश्चर्यचकितः द्वितीयः पथिकः अवदत् - ''अहो, कियत् सुन्दरं वचनं भवतः !! भवान् कथं जानाति यत्

एतत् सर्पस्य बिलं न इति ? किम् अत्र प्रमाणम् ?'' इति ।

''भोः, शृणोतु । यत्र बिलं दृश्यते तत्रैव एकः वृक्षः अस्ति । तस्मिन् वृक्षे अनेकानि पक्षिणां नीडानि सन्ति । ते पक्षिणः अपि अस्मादृशाः एव । ते अपि स्वरक्षणविषये जागरूकाः भवेयुः एव । सर्वेषु प्राणिषु सहजतया भयं भवति । एतत् सर्पबिलम् एव यदि स्यात् तर्हि पक्षिणः अत्र नीडस्य निर्माणं न कुर्युः एव । तथैव अण्डानि अपि न स्थापयेयुः'' इति वदन् तृतीयः पथिकः आच्छादकं स्यूतात् निष्कास्य तत्रैव प्रसार्य सुप्तवान् एव ।

तेषां त्रयाणां वचनानि गुरुः शिवानन्दः शिष्याश्च श्रुतवन्तः आसन् ।

गुरुः नूतनतया आगतं शिष्यं पृष्टवान् - ''भोः, एषु त्रिषु कः ज्ञानी, कः अज्ञानी, कश्च मूर्खः इति वक्तुं किं भवान् पारयेत् ?'' इति ।

शिष्यः सविनयम् अवदत् - ''न ज्ञायते'' इति ।

अन्याभ्यां शिष्याभ्याम् अपि अस्य प्रश्नस्य उत्तरं न ज्ञातम् आसीत् ।

तदा शिवानन्दः स्वेन कृतस्य प्रश्नस्य उत्तरं स्वयमेव सविस्तरम् उक्तवान् - ''यदि सर्पः आगच्छति तर्हि तं मारयामः, वयं त्रयः स्मः इति यः उक्तवान् सः मूर्खः । 'यदा वयं निद्रायां मग्नाः भवेम तदा सर्पः आगत्य दशेत् अपि । अतः अन्यत्र शयनार्थं स्थलान्वेषणं वरम्' इति यः उक्तवान् सः अज्ञानी । अत्र अपायस्य शङ्का अस्ति उत न इत्यपि सः चिन्तयितुं न सिद्धः आसीत् । यदि अपायः स्यात् तर्हि सः कीदृशः इति तृतीयः अचिन्तयत् । एतावता भवद्भिः ऊहितं स्यात् यत् एषु त्रिषु कः ज्ञानी इति । परिस्थितेः चिन्तनं सम्यक् कृत्वा अपायः कः, तस्य परिणामश्च कः इत्यादिकं स्वबुद्धिशक्त्या जानन् यः निर्णयं स्वीकरोति स एव ज्ञानी । स एव अपायस्य सम्मुखीकरणे, ततः विमोचने च समर्थः । भवन्तः अपि सः ज्ञानी इव शास्त्राध्ययनेन सह लौकिकं, व्यावहारिकं च ज्ञानं मेलयित्वा व्यवहारं कुर्वन्ति चेत् भवतां जीवनम् अपि सुखमयं भवेत्'' इति ।



भारतनायकस्पर्धायां भागम् ऊद्ध्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१३

अस्माकं पुराणसाहित्यस्थाः केचन कृतिनः बालाः सन्ति अत्र । किं तान् जानन्ति भवन्तः ?

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**



१ युद्धे मातुलानां साहाय्यं कुर्वन् अहं चक्रव्यूहं प्रविष्टवान् । किन्तु ततः बहिः आगमनं कथम् इति अहं न जानामि स्म । मम नाम किम् इति किं भवन्तः जानन्ति ?

..........................................................................

२ भगवतः विष्णुतः प्राप्तः वरः मां प्रकाशमानं नक्षत्रम् अकरोत् । मम नाम किम् ?

..........................................................................

३ 'यमाय त्वं दत्तः' इति पितुः कथनस्य अनन्तरम् अहं यमलोकं गत्वा जन्ममरणयोः रहस्यं मृत्युदेवात् यमात् ज्ञातवान् । मम नाम किम् ?

..........................................................................

४ अहं मम अन्धौ मातापितरौ स्कन्धाभ्यां वहन् सम्यक् पालयन् आसं, यावत् कश्चन राजकुमारः अन्धकारे बाणेन मां प्राहरत् तावत् । मम नाम किम् ?

..........................................................................

५ मम पिता मां मारयितुं बहुधा प्रयत्नं कृतवान् । किन्तु मम आराध्यदेवः सर्वदा मां रक्षितवान् । मम नाम किम् ?

..........................................................................

प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । मम प्रियतमः नायकः ..........................................................................

..........................................................................

..........................................................................

..........................................................................

भागग्रहीतुः नाम ..........................................................................

वयः .............................. कक्ष्या ..............................

सङ्केतः ..........................................................................

..........................................................................

..........................................................................

पिन् .............................. दूरवाणी ..............................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतीयनायकस्पर्धा -१३**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७

उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, नवम्बर्, २००२

**नियमाः -**

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

# पाचकस्य संस्कारः

विनयः रामपुरीयभूस्वामिनः सोमनाथस्य एकमात्रपुत्रः । प्रतिदिनं सः मित्रैः सह जल्पनं कुर्वन् व्यर्थतया अटति स्म । रात्रौ विलम्बेन गृहं प्रत्यागच्छति स्म च । यावत् सः न प्रत्यागच्छति तावत् तस्य माता तदीयप्रतीक्षां करोति स्म । विनयस्य प्रत्यागमनस्य अनन्तरं पाचकः विघ्नेशः यथायोग्यं परिवेषयति स्म । एतत्सर्वं परिशील्य माता शयनार्थं गच्छति स्म । विनयस्य आगमनपर्यन्तं विघ्नेशः किमपि पुस्तकं पठन् उपविशति स्म ।

एकदा विनयः रात्रेः द्वादशवादनसमये गृहं प्रत्यागतः । तस्मिन् अपि समये पुस्तकं पठन्तं विघ्नेशं दृष्ट्वा सः उपहासमिश्रितस्वरेण अवदत् - ''हुं, प्रवर्ततां, पठनं प्रवर्तताम् । पठनात् उत्तमः संस्कारः प्राप्यते'' इति ।

तदा विघ्नेशः अवदत् - ''महोदय ! केवलेन पठनेन कोऽपि संस्कारवान् न भवेत् संस्कारः तु पठनात् विना अपि प्राप्यते । अत्र माता एव उदाहरणम् । सा प्रतिदिनं रात्रौ भवन्तं प्रतीक्षते । यावत् भवान् न प्रत्यागमिष्यति तावत् शयनं न करोति सा । असदृशं वात्सल्यं तस्याः । उषसि अपि शीघ्रम् उत्थाय भवत्पितुः सेवां विनालोपं करोति सा । एतादृशाः संस्काराः पठनात् विना अपि तया कथं प्राप्ताः ?'' इति ।

एतत् श्रुतवान् विनयः कशाप्रहारं प्राप्तवान् इव जागरितः जातः । 'मत्कारणतः मातुः कियत् कष्टं जायमानम् अस्ति' इति अवगतवान् सः । पाचकः विघ्नेशः परोक्षरूपेण तदीयम् असंस्कृतत्वं यत् ज्ञापितवान् तदपि अवगतं तेन ।

आत्मनः दोषम् अवगतवान् सः निर्णीतवान् यत् विलम्बेन आगमनं परित्यक्ष्यामि इति । अतः सः प्रतिदिनं शीघ्रम् आगमनम् आरब्धवान् । विघ्नेशस्य पठनं तु अनुवर्तते स्म । तस्मात् सः विशेषलाभान्वितः जातः ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

१८

चित्रं - पाणिः

गुहामन्दिरे तान्त्रिकबन्ध्वोः अनुष्ठानादिकार्यक्रमाः अस्तव्यस्ताः जाताः इत्यवः स्पष्टं भवति यत् महती शक्तिः एव योजनायाः वैफल्यस्य कारणम् इति । यदा तान्त्रिकः गरुडः इति नाम उच्चारयति तदा नरेन्द्रदेवः आश्चर्यचकितः भवति । तान्त्रिकः तं वदति यत् भवान् पुत्रं रवीन्द्रदेवम् आनाययतु इति । नरेन्द्रदेवः राज्यात् बहिः तिष्ठति चेत् वरम् इति तान्त्रिकः आदिशति । रवीन्द्रदेवः आप्तैः सह निर्गमनाय सन्नद्धः भवति ।

आप्तपुरुषाः चान्दनीनदीतीरे रवीन्द्रदेवेन मिलन्ति । रवीन्द्रदेवः आदित्यस्य अन्वेषणे मग्नः ।

इदानीम् आदित्यः विस्मर्तव्यः । शीघ्रं पर्वतीयगुहास्थः पिता द्रष्टव्यः । राजधान्यां वासेन अपायः भवेत् इति तान्त्रिकवर्यः चिन्तयति ।

कथं तं विस्मरेयम् ? चन्द्रपुर्याः सिंहासनस्य प्राप्तौ सः एव कण्टकायेत । तथापि .....

पर्वतीयगुहां प्रति गमनाय सन्नाहः क्रियताम् ।

भवन्तु केचन दुर्गं प्रतिगच्छन्तु । आदित्यः आगच्छति चेत् प्रासादप्रवेशाय अनुमतिः न दातव्या ।


आदित्यः पुनर्वासोपनिवेशं गच्छति । तत्र महत् स्वागतं भवति तस्य ।
भवतां कृते मया शुभवार्ता आनीता ।
पुनः स्वागतम् मन्त्रिवर्यस्य ।
वयं भवतः अनुपस्थित्या खिन्नाः आस्म ।
अस्माकं राजा राजधानीं प्राप्नुवन् अस्ति । रामसिंहः तेन सह अस्ति । नरेन्द्रदेवः तत्पुत्रः च सिंहासनं स्वायत्तीकर्तुं कुतन्त्रं रचितवन्तौ स्तः । महाराजस्य रक्षणम् अस्माकं कर्तव्यम् ।


आदित्यः तत्रत्येभ्यः तरुणेभ्यः विशिष्टं कार्यं ददाति ।
अत्याचारिणः विद्रोहिणः च विरुद्ध्य अस्माभिः कार्यं करणीयम् । राज्ञः निमित्तं निरापदः मार्गः कल्पनीयः अस्माभिः ।
वयं राज्ञः, स्वदेशस्य च रक्षणाय प्राणान् पणीकृत्य कार्यं करिष्यामः ।


तेषु केचन आदित्येन सह गमनाय सन्नद्धाः भवन्ति ।
अन्ये केचन राज्ञः मार्गे स्वस्य स्वस्य स्थानं स्वयं निश्चिन्वन्ति ।

यावत् आदित्यः दुर्गं प्राप्नोति तावता तस्य पृष्ठतः स्वयंसेवकानां महती पङ्क्तिः स्थिता भवति ।

स्थीतयाम् ।
श्रूयताम् ।

अस्माभिः प्रासादस्य सर्वाणि बहिर्द्वाराणि पिधातव्यानि, तेषां द्वारा एव प्रासादस्थाः राजभक्ताः रक्षकाः निष्कासिताः सन्ति ।

आदित्यः कैश्चित् युवकैः सह प्रासादं प्रविशति रवीन्द्रदेवाय सन्देशं प्रेषयति च ।

सर्वविरोधान् सम्मुखीकर्तुं सिद्धाः भवन्तु ।

वयं कथञ्चित् प्रासादस्य प्रवेशं कुर्याम एव ।

समूहस्य नायकः मुख्यरक्षकेण सह प्रत्यागच्छति ।

महोदय ! राजकुमारः सेनाधिपतिः च राजधान्यां न स्तः ।

यदि एतत् सत्यं तर्हि ....

..आत्मसमर्पणं करोतु । दुर्गं च परित्यजतु ।

प्रासादस्य रक्षणप्रमुखः प्रत्यागच्छति ।

अस्माकं बहवः जनाः आयुधत्यागम् अङ्गीकृतवन्तः सन्ति ।

यैः विरोधः कृतः ते बलात् वशीकृताः ।

अनुवर्तते

# कालोऽयं मनोविनोदस्य

## वर्णः संयोज्यताम्

पार्श्वे रमणीयं दृश्यम् अस्ति । एतस्मिन् वर्णः योजितः चेत् एतस्य रामणीयकता द्विगुणिता स्यात् । वयम् अत्र भवतां साहाय्याय वर्ण-संयोजनक्रमम् अपि सूचितवन्तः स्मः ।





## अखण्ड-रेखाचित्रम्

एषा मधुमक्षिका रमणीया अस्ति खलु ? एतस्याः वैशिष्ट्यं नाम एषा अखण्डरेखया चित्रिता । एतादृशीम् एव निर्मातुं भवन्तः अपि प्रयतन्ताम् ।

# भेदाः अन्विष्यन्ताम्

अधोनिर्दिष्टं चित्रद्वयं समानाकारकम् इति भासते । किन्तु तयोः चित्रयोः अष्ट भेदाः सन्ति । तान् अभिजानन्तु ।





# रहसि स्थिताः विघ्नाः



वानरः मोनिवः वृक्षस्य अधः सुखेन शयानः अस्ति । किन्तु तं परितः सन्ति विघ्नोत्पादकाः केचन । ते विविध-पशु-पक्षिरूपेण सन्ति । किं भवन्तः तान् अभिज्ञातुं शक्नुयुः ?

(उत्तराणि ६६ तमे पृष्ठे)




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'अगस्ट्'मासीयस्पर्धाशीर्षिकाप्रेषकः -**

**श्री पि.पि.करुणाकरन् नायर्**
*मङ्गला, बेळ्ळिकोट्, अजनूरु पो.*
*जि. कासरगोडु, केरल - ६७१ ५३१*

**पुरस्कृतशीर्षिका**





**निर्जीवमपि भाति सजीवम् ।
सजीवोऽप्ययं निर्जीवप्रायः ।**

**उत्तरम् मनोविनोदस्य (पु - ६४)**

### अन्विष्यन्तां भेदांशाः

१. डिनोसारस्य भ्रूः ।
२. तच्छरीरस्थं वर्तुलचिह्नम् ।
३. तदीया पादाङ्गुलिः ।
४. शशस्य दन्तः ।
५. शिला ।
६. मर्कटपुच्छस्य दैर्घ्यम् ।
७. वृक्षशाखा ।
८. वृक्षस्थमर्कटस्य पुच्छेन शाखायां निर्मितः वलयः ।

**रहसि स्थिताः**
विघ्नाः !!



Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

